तदपृथक्सिद्धिकारणात् ईश्वरोऽपि गुणेनेतेन संयुक्तोऽस्ति।[१] न केवलम् एतावदेवापितु तस्य अपरा वधूः लक्ष्मीः कमलासनास्ति कवेर्हृदयमपि च कमलरूपम् अत एव तदपि भगवन्निवासयोग्यं भवितुमर्हति।[२]

अनेन प्रकारेण रामभद्रदीक्षितस्य स्तोत्रेषु नवधभक्तिः विशदं प्रतिपादिता सर्वेष्वेतेषु भक्तिप्रकारेषु रघुवंशी सूर्यवंशी च राम एव कवेरुपास्यः भक्तिरसस्यालम्बनविभावश्च। कतिपयेषु स्तोत्रेषु रामस्य चापबाणतूणीराद्यायुधान्यपि शक्तिसम्पन्नत्वात् सामर्थ्याच्च भक्तिरसस्य आलम्बनविभावत्वेन विराजन्ते नैकालौकिककार्यसामर्थ्यं पापाहारिसामर्थ्यं मोक्षप्रदानसामर्थ्यंचैतेषामायुधानामुद्दीपनविभावत्वेनात्र प्रस्तुतानि सन्ति। बद्धजीवरूपत्वेन भक्तस्य रामभद्रदीक्षितस्य कैङ्कर्यकार्पण्यात्मनिवेदनवन्दनादय अनुभावा हर्षविषाददैन्यजडताधैर्यादयः व्यभिचारिणश्च प्रतीयन्ते। एतैस्सर्वैरलौकिकोपादानैः परिपुष्टः सन् भगवद्रतिरिति स्थायिभावः भक्तिरसत्वेन चर्व्यमाणः अलौकिकचमत्कारकारिरूपेण अभिव्यक्तः।

रामभद्रदीक्षितः न केवलं भगवद्भक्त अपितु साहित्यव्याकरणवेदान्तदर्शनादिशास्त्राणां नैपुण्यात् बहुश्रुतत्वात् प्रतिभावैशिष्ट्याच्च विद्वानाचार्योऽप्यासीत्। इदमेव कारणं यत्तस्य स्तोत्रेषु भक्ति-प्राधान्यादे उपास्यं प्रति पूर्णसमर्पणं दरीदृश्यते अपरस्तस्तु प्रतिभाव्युत्पत्यभ्यासैरत्र कारयित्रीभावयित्री इत्युभे प्रतिभे अपि दृश्येते।

---

१. (क) अपृथग्भूतशक्तित्वाद् ब्रह्माद्वैतं तदुच्यते।
तस्य या परमा शक्ति ज्योत्स्नेव हिमदीधितेः।। लक्ष्मीतन्त्रम् २.११

(ख) ब्रह्माद्वैतमिति। स्वापृथक्सिद्धशक्त्यंहताविशिष्टत्वात् तद्विशिष्टं ब्रह्मैकमेव तत्त्वमित्यर्थः।
तत्रैव (टीका), पृ० ६

२. क्षन्तुं त्वमर्हसि रघूद्वह मेऽपराधान्सर्वसहा ननु वधूरपि ते पुराणी।
वासालयं च तुन हृत्कमलं मदीयं कान्ता परापि न हि किं कमलालया ते।। तत्रैव, पद्यम् ५०

# मिद्विषये भगवतः पाणिनेर्दृष्टिप्रकर्षः

डॉ. हरिनारायणतिवारी

उपेयशब्दराशिं प्रतिपादयितुम् उपायं व्याकरणं निरमायि तत्र भगवता पाणिनिना। एतद्धि षट्सु शास्त्रेषु वेदस्य मुखस्थानापन्नं शास्त्रमुच्यते। म् इद् यस्यासौ मिद् उच्यते। यदवयवकः मकारः इत्संज्ञकः स्यात् स इति हि तदर्थः। तत्र मितमाश्रित्य व्यवस्थाद्वयम्। प्रथमं "मिदचोऽन्त्यात्पर" पा. सू. १/१/४७ इति परिभाषाशास्त्रम्, द्वितीयं "मितां ह्रस्वः" पा.सू. ६/४/९२/९३ चिण्णमूलोरिति विधिशास्त्रम्। तत्राद्यञ्च–संज्ञाभिन्नत्वे सति शब्दधर्मिकसाधुत्वप्रकारकाप्रामाण्यज्ञानानास्कन्दितबोधोपयोगि बोधजनकत्वम्। यथा– "रुणाद्धि" शब्दः साधुः। अत्र "रुणद्धि" शब्दो विशेष्यः, साधुशब्दः प्रकारीभूतः, रुणद्धिधर्मिकसाधुत्वप्रकारकाप्रामाण्यज्ञानानास्कन्दितो बोधः "रुधादिभ्यः श्नम्" पा.सू. ३/१/७८ इत्यस्य तदुपयोगि बोधजनकत्वं मिदचोऽन्त्यात्परः इत्यस्येति समन्वयः। अन्त्यञ्च साक्षाल्लक्ष्यसंस्कारक–साधुत्वप्रकारकबोधजनकत्वरूपं विधिशास्त्रम्। आद्यस्यार्थः यदि अन्त्यादचः परो भवतीत्युच्यते तर्हि "शे मुचादीनाम्" इत्यादौ इदं न प्रवर्तेत, तत्राऽन्त्यस्य अचोऽभावात्। अतः अच इति निर्धारणषष्ठी जात्यभिप्रायेण एकवचनम्। पूर्वस्मात्सूत्राद् अन्तग्रहणमनुवर्तते। अचां मध्ये योऽन्त्यस्तस्मात्परः तस्यैव अन्त्यावयवो मित् स्यादिति सूत्रार्थः। अन्त्यस्य च उपधायाः, णौ, इति पदद्वयमनुवर्त्य मितामुपधाया ह्रस्वः स्याण्णौ परे इत्यर्थमामनन्ति सुधियः।

आद्यस्य विधिसूत्रैकवाक्यतया प्रयोजनमन्वाख्यायते–

इदितो नुम् धातोः[१] इत् = ह्रस्वः इकारः इतः = इत्संज्ञा यस्य स इदित्, तस्येति विग्रहः। इत्संज्ञकेदन्तधातोरन्त्यादचः परः अन्त्यावयवो मित् स्यादिति। तेन चक्षिङादौ एतस्य न प्रवृतिः। स्कुदि आप्रवणे पा.धा.पा९। अत्र इदित्त्वान्नुँम्। मकर इत् उँकार उच्चारणार्थः। मित्त्वादन्त्यादचः परः। स्कुन्दते। चुस्कुन्दे इति।

**शे मुचादीनाम्।**[२]

मुचादीनामन्त्यादचः परः अन्त्यावयवः शे परे मुम् स्यादिति सूत्रार्थः। मुच्लृ मोक्षणे पा.धा. पा१४३०। मुञ्चति। मुमुञ्चे। मुञ्चते। लुप्लृ छेदने पा.धा.पा१४३१। विद्लृँ लाभे पा.धा.पा१४३२। लिप उपदहे पा.धा.पा१४३३। षिच क्षरणे पा.धा.पा१४३४। कृती छेदने पा.धा.पा१४३५। खिद परितापे पा.धा. पा१४३६। पिशि अवयवे पा.धा.पा१४३७। इति मुचादयः।

---

१. पा. सू. ७/१/५८

२. पा. सू. ७/१/५९

**मस्जिनशोर्झलि।**[१]

मस्जिनशोः षष्ठ्यन्तं झलि सप्तम्यन्तम्। पूर्वसूत्राद् नुम् इत्यनुवर्तते। मस्जिनशोः अन्त्यादचः परः अन्त्यावयवः नुम् स्यादिति सूत्रार्थः। यथा– ननंष्ट, नंष्टा इति। टुमस्जो शुद्धौ पा.धा.पा१४३८ संयोगादिसलोपानन्तरं "मस्जेरन्त्यात्पूर्वो नुम् वाच्यः वा.३२१ इति वार्तिकेन नुम्। लिटि–ममङ्क्थ, लुटि मङ्क्ता इति।

**रधिजभोरचि।**[२]

रध पा.धा.पा११९३ हिंसासंराध्योः श्यन्विकरणः। जभी पा.धा.पा३८८ गात्रविनामे शप्–विकरणः। अनयोर्मुम् स्यादचि। ररन्ध, ररन्धतुः जम्भते, जजम्भे इति।

**नेट्यलिटि रधेः।**[३]

लिड्वर्जे इटि रधेर्नुम न स्यादिति सूत्रार्थः। रधिता, रद्धा. रधिष्यति, रत्स्यति इति। अत्र "रधादिभ्यश्च," इतीड्विकल्पः।

**रभेरशब्लिटोः।**[४]

रभेर्नुम् स्यादचि, न तु शब्लिटोः परयोः। उदाहरणम्–अरारम्भत्।

**लभेश्च।**[५]

लभेः नुम् स्यादचि परे, न तु शब्लिटोः। अललम्भत्।

आङो यि।[६]

नुम् लभेः इति पदद्वयमनुवर्तते। यि इति प्रत्ययविशेषणम्। अल्वात्तदादिविधिः। आङः पञ्चम्यन्तम्, यि सप्तम्यन्तम्। अतः–आडः परस्य लभेर्नुम् स्याद्यादौ प्रत्यये विवक्षिते सति इत्यर्थः। आलम्भ्यो गौः।

**उपात्प्रशंसायाम्।**[७]

लभेः षष्ठ्यन्तम्। नुम् प्रथमान्तम्। यि सप्तम्यन्त इति पदत्रयमनुवर्तते। उपात्पञ्चम्यन्तं निमित्तवचनं प्रशंसायामिति सति सप्तमी। तस्मात् सूत्रार्थः–उपात्परस्य लभेः नुम् स्यात्, यादौ प्रत्यये विवक्षिते प्रशंसायां गम्यमानायां सत्यामिति। यथा– उपलम्भ्यः साधुः। समीपे प्राप्यः, स्तुत्यो वेत्यर्थः। अत्र साधुशब्दात्प्रशंसा गम्यते।

१. पा. सू. ७/१/६०
२. पा. सू. ७/१/६१
३. पा. सू. ७/१/६२
४. पा. सू. ७/१/६३
५. पा. सू. ७/१/६४
६. पा. सू. ७/१/६५
७. पा. सू. ७/१/६६

**उपसर्गात्खल्घञोः।**[1]

उपसर्गादेव लभेः नुम् स्यात् खल्घञोः परयोः। यथा–ईषत्प्रलम्भः, दुष्प्रलम्भः सुप्रलभः। अत्र "ईषद्दुःसुषु कृच्छाकृच्छार्थेषु खल्" पा.सू.३/३/१२६ इत्यनेन खल्प्रत्ययः। उपालम्भः। अत्र घञ्प्रत्ययः। उपसर्गात् किम्? ईषल्लाभः। लाभः। अत्र न नुम्।?

**न सुदुर्भ्यां केवलाभ्याम्।**[2]

उपसर्गान्ताररहिताभ्यां सुदुर्भ्यां लभेरन्त्यादचः परः नुम् न स्यात् खल्घञोः परयोः। यथा–सुलभम्, सुदुर्लभम्। केवलाभ्यामिति किम्? सुप्रलम्भः, अतिदुर्लम्भः। अत्र न हि केवलौ सुदुरूपसर्गौ, अपि तु प्रातिपूर्वकौ इति विशेषः। कथन्तर्हि अतिसुलभमतिदुर्लभमित्यत्र नुम् न विहितः? यदा "स्वती पूजायामिति" बा.म.टी.च.ख.पृ. ६४० पूजार्थकौ इमौ कर्मप्रवचनीयौ तदा उपसर्गत्वाभावान्न सुदुरोरूपसर्गसहितत्वम्। अतो न तत्र पूर्वसूत्रेण नुम्प्राप्तिरिति विवेकः।

**विभाषा चिण्णमुलोः।**[3]

लभेः षष्ठ्यन्तं नुम्प्रथमान्तं पदद्वयमनुवर्तते। परिभाषासूत्रमुपतिष्ठते। अन्त्यादचः परः लभेर्नुम् स्याच्चिण्णमुलोः परयोः। अलम्भि, अलाभि, इति चिणः उदाहरणम्। व्यवस्थितविभाषेयम्। तस्मात् प्रालम्भि इत्यत्र नित्यं नुम्। णमुल्–लम्भं लम्भम्। लाभं लाभम्। व्यवस्थितविभाषया उपसृष्टस्य नित्यं नुम्। प्रलम्भं प्रलम्भम्।

**उगिदचां सर्वनामस्थानेऽधातोः।**[4]

अधातोरुगितो नलोपिनः अञ्चतेश्च नुमागमः स्यात् सर्वनामस्थाने इति सूत्रार्थः। यथा–मघवान्, मघवन्तौ, मघवन्तः। अत्र नुम् मित्त्वादन्त्यादचः परो भवति। अधातोरित्यत्र अधातुभूतपूर्वस्यापि ग्रहणम्। एवञ्च गोमानिवाचरतीति गोमान् इत्यत्र सम्प्रति धातुत्वेऽपि विध्यर्थमधातुग्रहणम्। अञ्चतिग्रहणं नियमार्थम्–उगितो धातोश्चेद् भवति तर्हि अञ्चतेरेवेति। नलोपिनः अञ्चतेरुदाहरणम्, प्रत्यङ्, प्रत्यञ्चौ प्रत्यञ्चः इति।

**युजेरसमासे।**[5]

सर्वनामस्थाने नुम् इति पदद्वयमनुवर्तते। युजेर्नुम् स्यात्सर्वनामस्थाने परे इत्यर्थः। यथा– युङ्, युञ्जौ, युञ्जः इति। असमासे किम्? सुयुक्, सुयुजौ, सुयुजः। अत्र नुम् न।

**नपुंसकस्य झलचः।**[6]

---

१. पा. सू. ७/१/६७
२. पा. सू. ७/१/६८
३. पा. सू. ७/१/६९
४. पा. सू. ७/१/७०
५. पा. सू. ७/१/७१
६. पा. सू. ७/१/७२)

सर्वनामस्थाने, नुम् इति पदद्वयमनुवर्तते। इकः षष्ठ्यन्तमुद्देश्यवचनं विशेषणपदम्। अङ्गस्येत्यधिक्रियते। तस्मात्तदन्तविधिः। डगन्ताङ्गस्य अजादौ विभक्तौ नुम् स्यादिति सूत्रार्थः। यथा–वारिणि, वारीणि, वस्तुनो, वस्तूनि।

**नाभ्यस्ताच्छतुः।**[1]

न अव्ययपदं निषेधवचनम्। अभ्यस्तात् पञ्चम्यन्तं निमित्तवचनम्। शतुः षष्ठ्यन्तमुद्देश्यवचनम्, त्रिपदमिदं सूत्रम्। अभ्यस्तात्परस्य शतुः नुम् न स्यादिति सूत्रार्थः। उदाहरणम्–ददत्, ददतौ, ददतः। किमभ्यस्तमिति जिज्ञासायां तत्संज्ञाविधायकं सूत्रद्वयम्– "उभे अभ्यस्तम्" पा.सू.६/१/५ "जक्षित्यादयः षट्" पा.सू.६/१/६ इति। आद्यस्यार्थः–षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः। द्वितीयस्य चार्थः–पूर्वसूत्रादभ्यस्तमित्यनुवृत्तं बहुवचनान्ततया विपरिणम्यते। अत्र जक्षितिरादिः येषामिति तद्गुणसंविज्ञानबहुव्रीहौ सति जझधातुमारभ्य षण्णामेव ग्रहणं स्यात्, वेवीङो न स्यात्। अतद्गुणसंविज्ञानबहुव्रीहौ तु जागृ आरम्भ षण्णां ग्रहणं स्यात्, न तु जक्षेः। अतः जक्षितिरित्यत्र शितपा–निर्देशः, जक्षधातुरित्यर्थः। "रुदादिभ्यः सर्वाधातुके" पा.सू. ७/२/७६ इति इडागमे रूपम्। सूत्र जक्ष् इति पृथक्पदम्, इतिना जक्षिः परामृश्यते। इति आदिः येषामित्यतद्गुणसंविज्ञानो बहुव्रीहिः। ततश्च इत्यादयः षट् इत्यनेन जक्ष्धातोः अन्ये जागृ इत्यारम्भ षड्धातवो विवक्षिताः। चशब्दः अध्याहार्यः। एवञ्च यक्ष्धातुश्च जागृ इत्यारभ्य षड्धातवश्च इत्येवं सप्तधातवः अभ्यस्तसंज्ञकाः स्युरिति सूत्रार्थः। ते च–जक्ष भक्षणहसनयोः पा.धा.पा.१०७५, दीधीङ् दीप्तिदेवनयोः पा.धा.पा. १०७६, वेवीङ् वेतिना तुल्ये पा.धा.पा.१०७७, इति सप्तधातवः अदादौ पठिता लुग्विकरणाः। यथा–जक्षत्, जक्षतौ, जक्षतः। जाग्रत्, जाग्रतौ, जाग्रतः। दरिद्रत्, दरिद्रतौ, दरिद्रतः। शासत्, शासतौ, शासतः। चकाशत्, चकाशतौ, चकाशतः। दोधेवेत्र्योः ङित्वेऽपि छान्दसत्वात् व्यत्ययेन परस्मैपदम्। दीध्यत्, दीध्यतौ, दीध्यतः। वेव्यत्, वेव्यतौ, वेव्यतः। इति।

**वा नपुंसकस्य।**[2]

वा अव्ययपदम्, नपुंसकस्य षष्ठ्यन्तं पदम्, द्विपदमिदं सूत्रम्। अभ्यस्तात्, शतुः, सर्वनामस्थाने इति पदत्रयमनुवर्तते। अभ्यास्ताच्छत्रन्तस्य क्लीबस्य वा नुम् स्यात् सर्वनामस्थाने परे इति सूत्रार्थः। उदाहरणम्– ददन्ति, ददति।

**आच्छीनद्योर्नुम्।**[3]

शतुः षष्ठ्यन्तं वाऽव्ययपदमिति पदद्वयमनुवर्तते। अङ्गस्य इत्यधिक्रियते। तस्य अङ्गस्य इत्यावृत्त्य एकं पञ्चम्या विपरिणम्यते, आत् इत्यनेन सह विशेष्यते च। तस्मात्तदन्तविधिः– अवर्णान्तादङ्गादित्यर्थः। परस्येत्याह्रियते। शतुरित्यनन्तरमवयवस्य इत्यध्याह्रियते, तेनाङ्गस्य इति षष्ठ्यन्तं

१. पा. सू. ७/१/७८)

२. पा. सू. ७/१/७९

३. पा. सू. ७/१/८०

विशेष्यते। तस्मात्तदन्तविधिः– शतुरवयवस्य तदन्तस्याङ्गस्येति लभ्यतें। अतः सूत्रार्थः–अवर्णान्तादङ्गात्परो यः शतुरवयस्तदन्तस्य अङ्गस्य नुम् वा स्याच्छीनद्योः परयोः। यथा–तुदन्ती, तुदतीऔङ्: श्यां नुमि तदभावे च रूपम्। शविकरणे कृते शतुरकारेण पररूपे कृते सति, तुद इत्यवर्णान्तमङ्गम्। अङ्संज्ञासूत्रे तंदादिग्रहणेन विकरणविशिष्टस्याप्यङ्गत्वात्। ततश्च "तुदत्" इत्यन्त्यस्तकारः शतुरवयवः। तुद इत्यवर्णान्तादङ्गात् परो यः शतृप्रत्ययः इत्याश्रयणे तु अत्र नुम् न स्यात्ः शविकरणाकारस्य शतुः पूर्वान्तत्वे शतुरवर्णान्तादङ्गात् परत्वाभावात्, परादित्वेऽवर्णान्ताङ्गाभावात्, उभय आश्रयणे नान्तादिवदिति निषेधाच्च। इदं शेरूदाहरणम्। नद्यास्तु। तुदन्ती, तुदन्त्यौ, तुदन्त्यः। तदुती, तुदत्यौ, तुदत्यः।

**शप्श्यनोनित्यम्।**[१]

आच्छीनद्योर्नुम् शतुरित्यनुवर्तते। अवयव इति चाध्याह्रियते। शप्श्यनोरात्परो यः शतुरवयवः तदन्तस्य नित्यं नुम् स्यात् श्यप्श्चन परतः। औङः श्यां पचन्ती दीव्यन्ती, क्रीडन्ती। नद्याः–पचन्ती पचन्त्यौ, पचन्त्यः। दीव्यन्ती, दीव्यन्त्यौ इति।

**सावनडुहः।**[२]

आच्छीनद्योर्नुम् श्यतः नुम् अनुवर्तते। सौ इति सप्तम्यन्तं निमित्तवचनम्, अनडुहः इति षष्ठ्यन्तमुद्देश्यवचनम्। सुप्रत्ययाव्यवहितपूर्वत्वविशिष्टस्य अनडुहः नुम् स्यात्, स च अन्त्यादचः परः अन्त्यावयवः इति सूत्रार्थः। अनड्वान्।

**दृक्स्ववस्स्वतवसां छन्दसि।**[३]

एषां छन्दसि नुम् स्यात् सौ। कीदृङ्ङिन्द्रः। स्ववान्। स्वतवान् इति।

**चतुरनडुहोरामुदात्तः।**[४]

अनयोराम् स्यात् सर्वनामस्थाने परतः, स चोदात्तः स्यादिति। यथा– अनड्वान्, अनड्वाहौ, अनड्वाहः। चत्वारि।

**अम् सम्बुद्धौ।**[५]

चतुरनडुहोरित्यनुवर्तते। अनयोरमागमः स्यादिति सूत्रार्थः। हे अनड्वन्! हे चत्वः! यदा कस्यचिच्चतुर्नाम तदेदमुदाहरणं गौडे वा अन्यथा चतुश्शब्दस्य नित्यं बहुवचनान्तत्वेन एकवचनस्य प्रत्ययस्य ततः परमभावात्।

**तृणह इम्।**[६]

---

१. पा. सू. ७/१/८१
२. पा. सू. ७/१/८२
३. पा. सू. ७/१/८५
४. पा. सू. ७/१/९८
५. पा. सू. ७/१/९९
६. पा. सू. ७/१/९२

कृतश्नमः 'तृह' पा.धा.पा.१४९६ हिसायां धातोनिर्देशः नाभ्यस्तस्य पा.सू. ७/३/८७, इत्यतः पिति, 'उतो वृद्धिर्लुकि हलि पा.सू.७/३/८९, इत्यतः हलि इति चानुवर्तते तृहः श्नमि कृते इमागमः स्याद् हलादौ पिति। यथा– तृणेढि, अतृणेट्, इति।

**पतः पुम्।**[५]

"ऋदृशोऽङि गुणः" पा.सू. ७/४/१६ इत्यतः अङि इति सप्तम्यन्तं निमित्तवचनमनुवर्तते। पतः पुम् स्यादङि स च अन्त्यादचः परः इति। अपप्तत्, अपप्तताम्, अपप्तन्। अपप्तः, अपप्ततम्, अपप्तत। अपप्तम्, अपप्ताव, अपप्ताम। इति।

**वच उम्।**[६]

अङि इत्यनुवर्तते। वचः षष्ठ्यन्तमुद्देश्यवचनम्, उम् प्रथमान्तं विधेयवचनम्। वचः उम् स्यादङि परे। अवोचत् अवोचताम्, अवोचन्।

**सृजिदशोर्झल्यमकिति।**[७]

अकिज्झलव्यवहितपूर्वत्वविशिष्टयोः सृजिदृशोः अन्त्यादचः परः अम् स्यात्। द्रष्टा, द्रक्ष्यति, स्रष्टा स्रक्ष्यति।

**अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्।**[१]

उपदेशेऽनुदात्तो य ऋदुपधस्तस्य अम्वा स्याज्झलादावकिति परे। सृप्लृ पा.धा.९८३ गतौ स्रप्ता, स्रप्स्यति। इति

**अरुर्द्विषदजन्तस्य मुम्।**[२]

"खित्यनव्ययस्य" इति सम्पूर्णं सूत्रमनुवर्तते। खितः प्रत्ययत्वात्तदन्तविधिः। अरुषो द्विषतोऽजन्तस्य च मुम् स्यात् खिदन्ते उत्तरपदे, न त्वव्ययस्य। यथा–जनमेजयः शुनिन्धयः तिलन्तुदः स्तनन्धयः, मृत्युञ्जयः इत्यादि।

**इच एकाचोऽम्प्रत्ययवच्च।**[३]

अम् च अम् चेत्येकशेषः। एकं विधेयसमर्पकम्। "इच एकाचोऽम्" इति प्रथमं वाक्यम्। इच इत्येकाच इति पञ्चम्यन्तं पदम्। "अलुगुत्तरपदे" पा.सू. ६/३/१ इत्याक्षिप्तं पूर्वपदमिचा विशेष्यते। एकाचः पूर्वपदादिगन्तादव्यवहितोन्तरत्वविशिष्टः अम् स्यादिति प्रथमवाक्यार्थः। द्वितीयम्पदं प्रत्ययवदित्येकदेशेन प्रत्ययेन समानाधिकरणं सम्बध्यते। असामर्थ्येऽपि वतिप्रत्ययः आर्षः। अम्प्रत्ययवदिति

---

५. पा. सू. ७/४/१९
६. पा. सू. ७/४/२०
७. पा. सू. ५८/१/५८
१. पा. सू. ७/४/५९
२. पा. सू. ६/३/६७
३. पा. सू. ६/३/६८

द्वितीयं वाक्यं सम्पद्यते। स्वादिप्रत्ययेषु यद्द्वितीयैकवचनं तदेवात्र अमिति विवक्ष्यते, व्याख्यानात्। अतः द्वितीयवाक्यार्थः-स च स्वाद्यम्वत् खिदन्ते परे। अत आह दीक्षितः-

इजन्तादेकाचोऽम्स्यात्, स च स्वाद्यम्वत् खिदन्ते परे इति। स्त्रियम्मन्यः, स्त्रीम्मन्यः। पूर्वस्मिन्नियङ् परस्मिन् पूर्वरूपम्।

**कारे सत्यागदस्य।**[१]

कारशब्दे परे मुम् स्यात्। सत्यङ्कारः, अगदङ्कारः।

**अस्तोश्चेति वक्तव्यम्।**[२]

कारशब्दे परेऽस्तुशब्दस्य मुम् वाच्यः। अस्तुङ्कारः।

**धेनोर्भव्यायाम्।**[३]

मुम् स्यात्। धेनुम्भव्या।

**लोकस्य पृणे।**[४]

पृणशब्दे परे लोकस्य मुम् स्यात्। लोकम्पृणः। पृणः इत्यत्र मूलविभुजादित्वात् कप्रत्ययः।

**इत्येऽनभ्यासस्य।**[५]

इत्यशब्दे परेऽनभ्यासाद् मुम्। अनभ्यासमित्यः। दूरतः परिहर्तव्य इत्यर्थः।

**भ्राष्ट्राग्न्योरिन्धे।**[६]

इन्धशब्दे परे आभ्यां मुम् स्यात्। भ्राष्ट्रमिन्धः, अग्निमिन्धः। इति।

**गिलेऽगिलस्य च।**[७]

गिलशब्दे परे गिलभिन्नस्य मुम् वाच्यः। तिमिङ्गिलः। अगिलस्य किम्? गिलगिलः।

**गिलगिले च।**[८]

गिलगिले परे पूर्वस्य मुम्। तिमिङ्गिलकिगलः।

**उष्णभद्रयोः करणे।**[९]

करणे परेऽनयोः मुम् स्यात्। उष्णङ्करणम्। भद्रङ्करणम्।

---

१. पा. सू. ६/३/७०
२. वा. ३/९/७६
३. वा. ३६७५
४. वा. ३९७६
५. वा. ३९७७
६. वा. ३९७८
७. वा. ३९७९
८. वा. ३९८०
९. वा. ३९८१

**श्येनतिलस्य पाते ञे।**[1]

श्येन तिल एतयोर्मुम् स्यात् ञप्रत्यये परे पातशब्दे उत्तरपदे। श्येनपातोऽस्यां वर्तते इति श्येनम्पाता मृगया। तिलपातोऽस्यां वर्तते इति तैलम्पाता स्वधा। उभयत्र।। घञः सास्यां क्रियेति ञः पा.सू. ४/२/५७ इत्यनेन घञन्तात्प्रथमान्तात् क्रियावाचिनः अस्यामिति सप्तम्यर्थे स्त्रीलिङ्गे ञप्रत्ययः।

**रात्रेः कृतिविभाषा।**[2]

कृदन्ते परे रात्रेः मुम् स्यात्। रात्रिञ्चरः रात्रिचर रात्रिमटः। रात्र्यटः।

**भ्रस्जो रोपधयो रमन्यतरस्याम्।**[3]

भ्रस्जो रेफस्य उपधायाः स्थानेऽन्त्यादचः परः रमागमो वा स्याद् आर्धधातुके परे। भ्रस्जः इत्यवयवषष्ठी, रोपधयोरिति स्थानषष्ठी। रश्च उपधा च, तयोरिति विग्रहः। रेफादकार उच्चारणार्थः। रेफस्य उपधायाश्च स्थाने, इति लभ्यते। बभर्ज, बभर्जतुः। रमभावे बभ्रज्ज, बभ्रज्जतुः इति।

**रुधादिभ्यः श्नम्।**[4]

रुधादिगणपठितेभ्यः धातुभ्यः श्नम् स्यात् कर्तरि, स च मित्वादन्त्यादचः परः। रुधिरः पा.धा. पा.१४३८ आवरणे। इरित्। रुणद्धि इति।

**मितां ह्रस्वः।**[5]

उपधायाः, णौ इति पदद्वयमनुवर्तते। मितामुपधाया ह्रस्वः स्याण्णौ परे इति।

**चिण्णमुलोर्दीर्घोऽन्यतरस्याम्।**[6]

चिण्परे णमुल्परे च णौ मितामुपधायाः दीर्घो वा स्यात्। शामिता–शमिता। शामिष्यते। अत्र "स्यसिच्सियुट्" इत्यनेन चिण्वद्भावः।

णमुल्–घाटं घाटम्। घटम्, घटम्।

---

१. पा.सू. ६–३–७

२. पा.सू. ६–३–७२

३. पा.सू. ६–३–४७

४. पा.सू. ६–३–७८

५. पा.सू. ६–४–९२

६. पा.सू. ६–४–९३

# व्याकरणे तदितरच्छास्त्रेषु च कर्मपदार्थविमर्शः

डॉ. सुजाता त्रिपाठी

व्याकरणं नाम शक्तिग्राहक[१] शास्त्रम्। न केवलं शक्तिग्राहकत्वमस्य अपितु धर्माऽधर्म-व्यवस्थापकत्वेन पुण्यजनकत्वमपि। तदेवोक्तं पतञ्जलिना "शास्त्रेण[२] धर्मनियमः" इत्यादि। आचार्यो भर्तृहरिरपि व्याकरणसिद्धां परम्परां प्रकृष्टं स्तौति। तदेवोक्तम्–

**चैतन्यमिव यश्चायमविच्छेदेन वर्तते।**
**आगमस्तमुपासीनः हेतुबाधैर्न बाध्यते।।**[३] इत्यादि।

तदेवं प्रक्रियातः दर्शनं यावत् ब्रह्मरूपप्रापकमिदं शास्त्रं न केवलं शाब्दिकजनप्रियमपितु सर्वविज्ञजनाराध्यम्। तदेव भर्तृहरिराह–

**नानार्थिकामिमां कश्चिद्व्यवस्थां कर्तुमर्हति।**
**तस्मान्निबध्यते शिष्टैः साधुत्वविषया स्मृतिः।।**[४]

प्रकृतप्रसङ्गे कर्मपदार्थस्य विवरणमुपादाय किञ्चिच्चर्यते। "उभयगतिरिह[५] भवति" इति परिभाषादर्शनादेवमनुभूयेत यदत्र शास्त्रे पदानि लोकसिद्धान् साङ्केतिकान्नर्थाश्च गृह्णन्ति। तदेव "संख्याया[६] अतिशदन्ताया कन्" इति सूत्रे 'अतिशदन्ताया' इति पर्युदासोऽपि प्रमाणम्। 'उभयगतिरित्यनेन तात्पर्यमिदमवधारणीयं यत् वाच्यार्थः सङ्केतितार्थश्च यथाप्रमाणङ्गृहीतव्यः। तदेवोक्तम्मूले परिभाषेन्दु-शेखरे–

---

१. शक्तिग्रहो व्याकरणोपमानकोशऽऽप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः।।
तर्कसंग्रहः, व्याख्या–कृष्णवल्लाभाचार्यः, किरणावलीव्याख्या, चौखम्बा, वाराणसी, पृ. संख्या–१३४

२. महाभाष्यम्, व्या. प्रो. जयशंकरलालत्रिपाठी, पस्पशाह्निक, पृ. सं. ६९, चौखम्बा कृष्णदास अकादमी, वाराणसी।

३. वाक्यपदीयम्, ब्रह्मकाण्डम्, कारिका संख्या–४१

४. वाक्यपदीयम्, ब्रह्मकाण्ड, व्याख्याकार पं. सूर्यनारायणशुक्लः कारिकासंख्या–२९, पृष्ठ संख्या–४९, चौखम्भासंस्कृतसंस्थानम्, वाराणसी

५. परिभाषेन्दुशेखरः, परिभाषासंख्या–९, चौखम्बासुरभारतीप्रकाशनम्, वाराणसी

६. पाणिनि–अष्टाध्यायी–सूत्रसंख्या– ५–०१–२२

"कर्तरि [1]कर्मव्यतिहारे", "कण्वमेघेभ्यः[2] करणे", "विप्र[3]तिषिद्धं चानधिकरणेत्यादिषु कर्मपदेन क्रिया एवं करणपदेन द्रव्यङ्गृह्यते। अत एव सञ्ज्ञादिबोधकसूत्राणां नियमार्थकत्वमपि कैश्चित् साधितम्। तेषामयमस्ति तर्कः "सिद्धे शब्दार्थसम्बन्धे[4]" इति वार्तिकेन शब्दार्थयोः वाच्यवाचकभाव-रूपशक्तिसम्बन्धस्यापि सिद्धत्वबोधनेन ''वृद्धि[5]रादैच्'' इत्यादिसञ्ज्ञाशास्त्राणां वैयर्थ्यापत्त्या शास्त्रे वृद्ध्यादिपदैः आदैच्-आदयः एव बोद्धव्याः इत्यादिनियमं प्रतिपादयन्ति। तदेवं "कृत्रिमाकृत्रिमयोः[6] कृत्रिमे कार्यसम्प्रत्ययः' इति प्रवादोऽपि सङ्गच्छते, सङ्केतितार्थत्वेन रूढः प्राबल्यात्। तदेवोक्तम्–"योगात् रूढिर्बलीयसी"। तेन अभिधानियामकत्वं सर्वेषां कृत्रिमपदानां सिद्ध्यन्ति।

अत्र प्रथमं कर्मपदं क्व-क्वार्थे साङ्केतितमेतत्सर्वमुपस्थाप्यते। अत्र आचार्यः पाणिनिः प्रथमन्तावत्कर्मपदोल्लेखं "कर्मणा [7]यमभिप्रैति स सम्प्रदानम्" इति सूत्रे करोति। तदनु "क्रुधद्रुहोरूप[8]सृष्टयोः कर्म" अतः परं "दिवः[9] कर्म च" ततः "अधिशीङ्[10]स्थासां कर्म" तदनु "गतिबुद्धि[11]–इति सूत्रे शब्दकर्मकाणामित्यत्र, एवममेव "उभयप्राप्ता[12] कर्मणि" 'कर्तृकर्मणोः[13] कृति' इति रूपेण च उल्लिलेख। अत्र सर्वत्राऽपि साङ्केतिकं कर्म गृहीतमस्ति। इतोऽन्यत्र प्राङ्निर्दिष्टेषु "कर्तरि कर्मव्यतिहारे" इत्यादिसूत्रेषु ततोऽन्यत्र अकर्मक इत्यादिपदघटितेषु च सूत्रेषु भिन्नस्वरूपेव कर्मेति पदं निर्वचनीयम्। अतः 'अकर्मक' इतिपदस्य कर्मरहितत्वमिति नार्थः अपितु कश्चित् भिन्न एव सङ्केतितार्थः प्रसिद्धयति। स च स्ववाच्यफलव्यधिकारणव्यापारवाचकत्वं[14] सकर्मकत्वम्, स्वार्थफलसमानाधिकरणव्यापारवाच-कत्वमकर्मकत्वमिति-रूपेण[15] प्रसिद्धः। "वारणार्थानाभीप्सितः[16]" इति भाष्याभिप्रायेण "तथायुक्तं चानीप्सितमित्यस्य सार्थक्यमुपादयन् आह। ईप्सितशब्दोऽत्र क्रियापरः नाभिप्रेतपरो रूढः। अयम्भावः

---

१. अष्टाध्यायी, १/०३/१४
२. तत्रैव, १/०३/१४
३. तत्रैव, २/४/१३
४. महाभाष्य, जयशंकरलालत्रिपाठी, पस्पशाह्निकम्, पृष्ठसंख्या-५२
५. पाणिनि- अष्टाध्यायी-सूत्र सं.- १/१/११, चौ. कृष्ण अकादमी, वारणसी
६. परिभाषेन्दुशेखरः परिभाषासंख्या-१००, चौखम्बासुरभारती, वाराणसी
७. पाणिनि-अष्टाध्यायी सू. संख्या- १/४/३२
८. तत्रैव, १/४/३८ (क्रुधद्रुहेर्ष्यासथर्थ साम्प्रति कोपः।। १-४-३६
९. तत्रैव, १/४/४३
१०. तत्रैव, १/४/४६
११. तत्रैव, १/४/५२
१२. तत्रैव, १/४/६६
१३. तत्रैव, १/४/६५
१४. वैयाकरणभूषणसारः, धात्वर्थनिर्णयः।
१५. तत्रैव।
१६. पाणिनि–अष्टाध्यायी सूत्रसंख्या– १/४/२७

लोके अभिष्टे अभीप्सितं हृद्यं दैतं वल्लभं प्रियमिति कोशबलेन च उद्देश्ये अर्थे ईप्सितशब्दस्य सङ्केतः उपलभ्यते। तेन "योगात् रूढिर्बलीयसी" इति नियमालोके कर्तुरुद्देश्यं कर्म इत्यादिरूपेण सूत्रार्थावधारणे 'पयसा ओदनं भुङ्क्ते' इत्यत्र पयसः कर्मत्वं प्राप्तं तदर्थमीप्सितशब्दोऽत्र क्रियापरः ग्राह्यः। तत्र मानं 'वारणार्थानामीप्सितः' इति, इति ईप्सितशब्दस्य क्रियापरत्वमुपपाद्यते। 'आप्लृ व्याप्तौ' इत्यस्माद्धातोः "धातोः कर्मणः समानकर्तृकादि[१]च्छायां वा" इति सनि अनुबन्धलोपे ततः "आज्ज्ञा[२]प्यृधाभीत" इति ईत्वे। "अत्र लोपेऽ[३]भ्यासस्य" इति अभ्यासलोपे, ततः सन्नन्तात् 'ईप्स' इत्यस्मात् "मतिबुद्धि[४]पूजार्थेभ्यश्च" इति वर्तमाने कर्मणि क्तः। ततोऽतिशयेन ईप्सितमित्यर्थे "अतिशायने[५]तमविष्ठनौ" इति तमपि ईप्सिततममिति सुसिद्ध्यति। तेन सम्बन्धिनी या यौगिकत्वं प्रमाणम्। एवमेव' तमपः प्रयोजननिरूपणावसरेऽस्य क्रियापरकत्वमेव साधितम्। अतः ईप्सिततमत्वं एवम् यपरिभाषितम्भवति। स्वप्रयोऽयत्वंस्ववाचकधातुवाच्यत्वमेतदुभयसम्बन्धेन व्यापारविशिष्टफलवत्त्वम्, ईप्सिततत्त्वञ्च स्ववाचकधातुवाच्यत्वमात्रम्।

एवम्प्रकारेण साङ्केतिककर्ममात्रम् अवगन्तव्यम्। पुनश्च एतत्सन्दर्भे कर्मपदघटितानां सूत्राणां विवरणमपि एवमाकलनीयम्–

(१) "कर्मणा[६] यमभिप्रैति[७] स सम्प्रदानम्"– अथ अयं बोधः– करणभूतेन कर्मणा यस्याभिप्रायं साधयति तत् कारकं सम्प्रदानसंज्ञकं भवति। उदाहरणानि यथा 'उपाध्याय गां ददाति', 'माणवकाय भिक्षां ददातीत्यादीनि'।

(२) क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः–प्रकृतशास्त्रस्य अयमर्थः उपकल्पनीयो भवति– क्रुधार्थानां द्रुहार्थानाम् ईर्ष्याथानाम् असूयार्थानाञ्च धातूनां प्रयोगे यं प्रति कोपस्तत् कारकं सम्प्रदानसंज्ञकम्भवति। देवदत्ताय क्रुध्यति, द्रुह्यति, ईर्ष्यति असूयति इत्यादीनि अस्य उदाहरणानि अवगन्तव्यानि उत्कटेच्छा तस्याः विषयः सत् कर्मपदवान्, भवति इति सामान्योऽर्थः। उक्त 'वारणार्थानामीप्सितः' इति सूत्रभाष्यबलात् ईप्सितशब्दास्य क्रियापरत्वं प्रतिपादितम् 'तस्मात् तद्भाष्यमविकल-मिहोपस्थाप्यते–

'तत्र हि [८]किमुदाहरणम्? 'माषेभ्यो गां वारयति' भवेद्यस्य माषाः, न गावः, तस्य माषा ईप्सिताः स्युः। यस्य तु खलु गावो, न माषाः कथं तस्य माषा ईप्सिताः स्युः। तस्यापि माषा सर्वेप्सिताः।

१. अष्टाध्यायी, ३/१/७
२. तत्रैव, ७/४/५५
३. तत्रैव, ७/४/५८
४. तत्रैव, ३/२/१८८
५. तत्रैव, ५/३/५५
६. तत्रैव, १/४/३२
७. तत्रैव, १/४/३७
८. महाभाष्यम्, वारणार्थानामीप्सितः।

अतश्चेप्सितः 'यवेभ्यो गां वारयति' इत्युक्तम्। माषा एवेप्सिता इत्यस्य ईप्सिता एवेत्यर्थः।" एतेन रूढिं मत्वा प्रश्नः उपस्थापितः यौगिकं मत्वा समाधानानाञ्च साधितम्। अन्यथा समाधानोपक्रमे तस्यापि माषा एव ईप्सिताः इत्यादिकथनमसङ्गतं स्यात्। अत्र एवकारः भिन्नक्रमः। स च ईप्सितपदेन सह सम्बध्नाति। अत एव उक्तम् 'ईप्सितशब्दोऽत्र क्रियाशब्दः'। एवमेव 'कूपात् अन्धं वारयति' इत्यत्र कूपे अपादानसञ्ज्ञायाः अप्राप्तिं समुद्भाव्य तस्यापि कूप एव ईप्सितः तथा च 'पश्यत्ययमन्धः कूपे मा प्रापत्' इत्यादिकथनमपि अस्य क्रियापरत्वं प्रतिपादितम् 'तस्मात् तद्भाष्यमविकलमिहोस्थाप्यते–

(३) दिवः कर्म[१] च– दव्धातोः साधकतमं यत् कारकं तत् कर्मसंज्ञ भवति चकारात् करणसंज्ञं च। अक्षान् दीव्यति, अक्षैर्दीव्यति वा।

(४) अधिशी[२]ङ्स्थासां कर्म–अधिपूर्वाणां शीङ्, स्था, आस् इत्येतेषाम् आधारो यस्तत् कारकं कर्मसंज्ञकं भवति इति सूत्रार्थः। उदाहरणानि तु ग्राममधिशेते, ग्राममधितिष्ठति, पर्वतमध्यास्ते इत्यादीनि बोध्यानि।

(५) [३]कर्तृकर्मणोः कृति–कृद्योगे कर्तरि, कर्मणि च षष्ठी स्यात्। कृष्णस्य कृतिः। जगतः कर्ता कृष्णः।

(६) उभयप्राप्तौ[४] कर्मणि–उभयोः प्राप्तिर्यस्मिन् कृति तत्र कर्मण्येव षष्ठी स्यात्। आश्चर्यो गवां दोहोऽगोपेन इति हि आस्योदाहरणम्।

उपर्युक्तेषु सर्वेषु शास्त्रेषु कर्मपदार्थः सङ्केतितः। कुत्रचिदयं क्रियापरोऽप्यस्ति। अतः तेषामपि शास्त्राणं शाब्दबोधनिरूपणमावश्यकमिति धिया केवलं सूत्रार्थः अधोलिखितः अस्ति–

(१) कर्तरि कर्म[५]व्यतिहारे–क्रियायाः व्यतिहारे विनिमये कर्तृवाच्ये धातोरात्मनेपदं भवति।

व्यतिलुनते क्षेत्रम्, व्यतिपुनते वस्त्रमिति उदाहरणे स्तः। विप्रतिषिद्धं चानधिकरण वाचि। कर्मपदार्थः न केवलं व्याकरणनये विवेचितरपितु तदितरवैशेषिकादिच्छास्त्रेष्वपि विलक्षणरीत्या प्रतिपादितः। विदन्ति सर्वे यत्समग्रमपि भारतीयदर्शनस्य किमपि अपूर्वं वैलक्षण्यमस्ति। तच्च मोक्षोपलब्धिरेव। तदर्थं ज्ञानस्यैव शरणं विभावनीयम्भवति।[६] केषां ज्ञानमिति प्रश्ने समाधिर्भवति तत्त्वानामिति।

---

१. महाभाष्यम्, १/४/४३
२. तत्रैव, १/४/४६
३. तत्रैव, १/३/६५
४. तत्रैव, १/३/६६
५. तत्रैव,
६. तत्रैव,

'द्रव्यगुणकर्मसामान्य[१]विशेषसमवायाभावनां सप्तपदार्थानां यथार्थज्ञानेन निःश्रेयसाधिगमं साधयन्ति वैशेषिकाः। इत्थं वैशेषिकदर्शने क्लृप्तद्रव्येषु अन्यतमो नाम कर्मेति किमिदं कर्म इति जिज्ञासायांमुच्यते– "संयोगभिन्नत्वे सति[२] संयोगासमवायिकारणं कर्म" इति। एतत्कर्म उत्क्षेपणादिभेदेन पञ्चविधम्भवति। तमेव कर्मविभागं प्रस्तौति विश्वनाथपञ्चाननः–

**उत्क्षेपणं ततोऽक्षेपणमाकुञ्चनं तथा।**
**प्रसारणं च गमनं कर्माण्येतानि पञ्च च॥[३]**

अत्र केचित् भ्रमणादीनां पृथक्तया कर्मत्वमिति शङ्कन्ते तन्निरस्यति मुक्तावलीकारः

**भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च।**
**तिर्यग्गमनमप्यत्र गमनादेव लभ्यते॥[४]**

एतेषामुत्क्षेपणादीनां लक्षणं यथाग्रन्थमधोलिखितमस्ति। उत्क्षेपणम्[५]–ऊर्ध्वदेशसंयोगासाधारणहेतुः। वस्तुनः अधोदेशेन सह वस्तुसंयोगं प्रति कारणीभूतं कर्म [६]अपक्षेपणमिति।

आकुञ्चनम्[७]–शरीरो-पदेशेन सह वस्तुसंयोगम्प्रति कारणीभूतं कर्म आकुञ्चनमिति। प्रसारणम् विप्रकृष्ट संयोग हेतुः। तद्भिन्नं गमन[८]मिति। तत्तु उत्तरदेशसंयोगानुकूलव्यापारः।

मीमांसादर्शनेऽपि प्रवृत्तिरूपेण निरूपितोऽस्ति कर्मपदार्थः।

---

१. तर्कसंग्रहः, व्याख्याकारः-कृष्णबल्लभाचार्यः, पृष्ठसंख्या-०६, चौखम्बा, वाराणसी
२. तत्रैव, कृष्णबल्लभाचार्यः, दीपिका टीका, पृष्ठसंख्या-१६, चौखम्बा, वाराणसी
३. कारिकावली कारिकसंख्या-०६
४. तत्रैव, ०७
५. तत्रैव, ०७
६. तत्रैव, ०७
७. तत्रैव, ०७
८. तत्रैव, ०७

# शाब्दिकमते समासशक्तिविमर्शः

श्रीगुणप्रकाशशर्मा

आचार्येण कौण्डभट्टेन वैयाकरणभूषणसारनामके ग्रन्थे समासशक्तिः नामकं विषयमवलम्ब्य वृहद्रूपेण चर्चा प्रस्फोटिता वर्तते। तत्र यथाभानं, यथामति, यथागुरुकृपमस्मिन् विषये साररूपतया मया निरूपयिष्यते।

तत्रादौ किन्नाम समासत्वमित्याकाङ्क्षायां "पाणिन्यादिसङ्केतसम्बन्धेन समासपदवत्त्वरूपम्, एकार्थीभावापन्नपदसमुदायविशेषत्वम् वेतिलक्षणं सम्पादितम्। अत्र पदपदेन पदत्वयोग्यस्य ग्रहणम्। पदत्वयोग्यत्वञ्च–पदत्वप्रयोजकप्रत्यय–निष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकधर्मवत्त्वरूपम्।"[१]

अथ च 'समसनं समासः' इति लक्षणमपि आचार्यैरुक्तम्। यस्मिन् समुदाये पदद्वयं पदत्रयं वा परस्परं समस्यते, स समुदायः समास इति। 'समर्थः पदविधिः'[२] इति शास्त्रबलात् पदविधेः समर्थाश्रितत्त्वमुरीकृतम्। विग्रहवाक्यार्थाभिधाने यः शक्तः, स समासः। पदानां विधिः पदविधिः, स च समासादिः। सामर्थ्यञ्च द्विविधं व्यपेक्षालक्षणमेकार्थीभावलक्षणं चेति। परस्परान्वयित्वं सामर्थ्यम्।

अत्र भाष्यकारेण "पृथगर्थानामेकार्थीभावः समर्थवचनं परस्परव्यपेक्षासामर्थ्यमेके"[३] इत्याकूतम्। तत्र व्यपेक्षालक्षणमेकार्थीभावलक्षणञ्च सामर्थ्यं परिभाषमाणः तत्त्वबोधिनीकारः "तत्र स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशाद्यः परस्परसम्बन्धः सा व्यपेक्षा, सैव वाक्ये राज्ञः पुरुष इत्यादौ।"[४] अस्मिन् पक्षे प्रत्येकं पदं परस्परं साकाक्षं भवति। अत एवोक्तं कैय्यटेन "परस्पराकाङ्क्षारूपा व्यपेक्षा"[५] तथा च प्रत्येकं पृथक्–पृथक् स्वातंत्र्येणार्थोपस्थापकञ्च भवति।

एकार्थीभावस्तु राजपुरुष इत्यादि वृत्तावेव। "पृथगर्थानामेकार्थीभाव"[६] इति भाष्यप्रदीपे उक्तम्। स चैकार्थीभावः प्रक्रियादशायां प्रत्येकमर्थवत्त्वेन पृथग् गृहीतानां पदानां समुदायशक्त्या विशिष्टैकार्थ–

---

१. वै.भू.सा. (प्रभाटीका), पृ. २६३
२. पा.सू. २–१–१
३. पा.सू. २–१–१
४. सि. कौ. तत्त्वबोधिनी सू. ६४७ "समर्थः पदविधिः"
५. म. भाष्य प्रदीपे २–१–१
६. म.भा.प्र. २–१–१

प्रतिपादकतारूपम्। विग्रहवाक्ये तत्तत्पदैः पृथक्तया प्रतिपादितानां राजाद्यर्थानां समासे विशिष्टशक्त्यै-कार्थीभवनम्। अत एव "यत्किञ्चिद्पदजन्यपृथगुपस्थितिविषयत्वेन लोकदृष्टानामर्थानां विशिष्टविषयैकशक्त्यधीनोपस्थितिविषयत्वमेवैकार्थीभावः"[1] इति फलति।

शाब्दिकाः समासप्रयोजनप्रदर्शनप्रसङ्गे ब्रुवते–ऐकपद्यमैकस्वर्यमेकविभक्तिकत्वञ्च समासप्रयोजनम्। इत्थं परस्परान्वययोग्यार्थकपदानामेव समासो भवति। "सापेक्षमसमर्थं भवतीति।"[2] भाष्यकृतोक्तम्। यत्रासामर्थ्यं तत्र समासादिवृत्तिर्न संभाव्यते। यथा–ऋद्धस्य राजपुरुष इत्यत्र समासाघटकऋद्धपदार्थेन सहान्वीयार्थकतया राजपुरुष इत्येवं राज्ञि पुरुषविशेषणे ऋद्धत्वविशेषणं नान्वेति, विशिष्टस्य एकपदार्थतया राज्ञः पदार्थैकदेशत्वात्।

अथ चायं समासः षड्विधो भवति। उक्तञ्च कौण्डभट्टेन–

**"सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा।**
**सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः।।"**[3]

अस्याः कारिकाया उदाहरणं यथाक्रममुपस्थाप्यते।

**१. सुपां सुपा–** सुबन्तस्य सुबन्तेन सह समासः। पदद्वयमपि सुबन्तम्। यथा–राजपुरुष इति। अत्र 'राज्ञः' इति सुबन्तस्य पुरुष इति सुबन्तेन सह समासः।

**२. सुपां तिङा–** पूर्वपदं सुबन्तं तिङन्तेन सह समस्यते। यथा–पर्य्यभूषयत्, अनुव्यचलत्। अत्र 'उदात्तगतिमता च तिङा'[4] इति वार्तिकेन परि, अनु इति सुबन्तयोः, अभूषयत्, अनुव्यचलत् इति तिङन्तेन सह समासः।

**३. सुपां नाम्ना–** सुबन्तस्य नाम्ना सह समासः। यथा–कुम्भकारः। अत्र 'उपपदमतिङ्' इति सूत्रेण 'कुम्भम्' इति सुबन्तस्य 'कार' इति नाम्ना समासः।

अत्र "गतिकारकोपपदानां" कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः"[5] इति परिभाषया 'कार' इति प्रातिपादिकात् सुबुत्पत्तेः पूर्वं समासो भवति। अन्यथा 'चर्मक्रीती' इत्यादौ नलोपानापत्तेश्च।

**४. सुपां धातुना–** सुबन्तस्य धातुना सह समासः। अर्थात् पूर्वपदं सुबन्तमुत्तरपदं धातुमात्रम्, न तिङन्तं परस्परं समस्यते। यथा– कटप्रूः। अत्र 'क्विव्वाचि प्रच्छयातस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं

१. वै.भू.सा. प्रभाटीकायां, पृ. २७७
२. म.भा. २–१–१
३. वै.भू.सा. समासशक्तिनिर्णय, कारिका, पृ. २६३
४. पा.सू. २/२/१८
५. परिभाषेन्दुशेखर परिभाषा ७६

च"[1] इत्यनेन वार्तिकेन धातुसुबन्तयोः द्वन्द्वघटकतया निर्देशेन निपातनात् समासः।

**५. तिङां तिङा–** अत्र तिङन्तस्य तिङन्तेन सह समासः, न धातुना। यथा पिबतखादता, पचतभृज्जता इत्यादयः। अत्र "आख्यातमाख्यातेन क्रियासातत्ये"[2] इत्यनेन सततं यस्यां क्रियायामभिद्योत्येऽर्थे मयूरव्यंसकाद्यन्तर्गणवार्तिकात् समासः।

**६. तिङां सुपा–** अत्र पूर्वपदतिङन्तस्य उत्तरपदेन तिङन्तेन सह समासः। यथा– जाहिस्तम्बः। अत्र 'जहीति' तिङन्तम्, 'स्तम्बमिति' सुबन्तम्। 'जहि कर्म्मणा बहुलमाभीक्ष्ण्ये कर्त्तारञ्चाभिदधाति'[3] इत्यनेन मयूरव्यंसकाद्यन्तर्गणवार्तिकात् समासः।

इदं सर्वं 'सह सुपा'[4] इति सूत्रीयभाष्ये तथा च शब्दकौस्तुभादौ ग्रन्थे स्पष्टमेव।।

स्वयमाचार्येण कण्ठरवेण प्रोक्तम् यत् स्वयं भाष्यादिसिद्धं तद्भेदं व्युत्पाद्य प्राचीनवैयाकरणोक्त-विभागस्याव्याप्त्यतिव्याप्त्यादिभिः तल्लक्षणस्य प्रायिकत्वं दर्शयति–

**"समासस्तु चतुर्द्धेति प्रायोवादस्तथा परः।**
**योऽयं पूर्वपदार्थादिप्राधान्यविषयः स च**
**भौतपूर्व्यात् सोऽपि रेखागवयादिवदास्थितः।।"**[5]

इदानीं समासश्चतुर्विधः। पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, उभयपदार्थप्रधानोद्वन्द्वः, अन्यपदार्थप्रधानो बहुब्रीहिरित्यादिलक्षणमपि प्रायिकम्। उन्मत्तगङ्गम्, सूपप्रति, अर्धपिप्पली, द्वित्राः, शशकुशपलाशमित्यादौ परस्परव्यभिचारात्। तथाहि उन्मत्तङ्गम् इत्यव्ययीभावे पूर्वपदार्थप्राधान्याभावादव्याप्तिः, अन्यपदार्थप्राधान्याद् बहुब्रीहिलक्षणातिव्याप्तिश्च, 'अन्यपदार्थे च सञ्ज्ञायाम्'[6] इति समासात्। सूपप्रति इत्यव्ययीभावे उत्तरपदार्थप्राधान्यात्तत्पुरुषलक्षणातिव्याप्तिः, अव्ययीभावाव्याप्तिश्च, 'सुप्प्रतिना मात्रार्थे'[7] इति समासात्। 'अर्द्धपिप्पली' इति तत्पुरुषे पूर्वपदार्थप्राधान्यसत्त्वात् अव्ययी-भावातिव्याप्तिः, तत्पुरुषाव्याप्तिश्च 'अर्द्धं नपुंसकम्'[8] इति समासात्।

'द्वित्राः' इति बहुब्रीहावुभयपदार्थप्राधान्याद् द्वन्द्वातिव्याप्तिः, बहुब्रीह्यव्याप्तिश्च। 'शशकुशपलाशम्' इत्यादिद्वन्द्वे समाहारान्यपदार्थप्राधान्यात् वहुब्रीह्यतिव्याप्तिः, द्वन्द्वाव्याप्तिश्च स्यात्।

१. सि. कौ. कृदन्तप्रकरण सू. ३/२/७८ पर वार्तिक ४१८५
२. सिद्धांतकौमुदी
३. पा.सू. २/१/४
४. पा.सू. २/१/४
५. वै.भू.सा. कारिका २९, पृ. २६७
६. पा.सू. २/१/२१
७. पा.सू. २/१/९
८. पा.सू. २/२/२

सिद्धान्ते तु 'अव्ययीभावाधिकारपठितत्वमव्ययीभावत्वम्' इत्यादि लक्षणं तत्पुरुषादिष्वपि विज्ञेयम्। असम्भवश्चैषामित्याह भौतपूर्व्यादित्यादि। रेखागवयादिनिष्ठलाङ्गूलादेवस्तिवपश्वलक्षणत्ववदेतेषामपि न समासलक्षणत्वम्। बोधकता तु तद्वदेव स्यादिति भाव:।[१]

इदानीं पूर्वपदार्थप्रधानोऽव्ययीभाव इति लक्षणस्थाने अव्ययीभावाधिकारपठितत्त्वमव्ययीभावत्वमङ्गीक्रियमाणे तत्र नास्ति कश्चनपि दोष:। एवमेव सर्वत्र तत्पुरुषादिष्वपि लक्षणेऽङ्गीक्रियमाणे दोषो नास्ति।

इयं समासवृत्ति: जहत्स्वार्थाऽजहत्स्वार्थेति भेदेन द्विविधा। अनयो: वृत्त्यो: क्रमश: एकार्थीभावव्यपेक्षारूपयो: पर्यवसनं लभ्यते। तत्र–

**"जहत्स्वार्थाजहत्स्वार्थे द्वे वृत्ती ते पुनस्त्रिधा।**
**भेद: संसर्ग उभयं चेति वाच्यव्यवस्थिते:।।"**[२]

**जहत्स्वार्था–** जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था अथवा जहति पदानि स्वानि यम् जहत्स्व:, जहत्स्व: अर्थो यस्यां सा जहत्स्वार्था। जहत्स्वार्थत्वन्नामैकार्थीभाव:, स्वशब्दोऽत्रात्मीयपर:। अवयवार्थनिरपेक्षत्वे सति समुदायाथबोधिकात्वं जहत्स्वार्थत्वम्। पदे वर्णवद् वृत्तो पदानामानर्थक्यमित्यर्थ:।

**अयमाशय:–** समासशक्त्यैव राजविशिष्टपुरुषभान (बोध) सम्भवे न राजपुरुषपदयोरपि पुनस्तद्बोधकत्वं कल्प्यम्, वृषभयावकादिपदेषु वृषादिपदानामिव। अन्यथा राजपदेन विग्रहवाक्य इव, राज्ञ: स्वातन्त्र्येणोपस्थितिसत्वात्, ऋद्धस्य राज्ञ: पुरुष इत्यत्रेव 'ऋद्धस्य राजपुरुष:' इत्यस्याप्यापत्तेरिति।[३]

अयं न्याय: लौकिकोऽपि तद्यथा– लोके दृश्यते पुरुषोऽयं परकर्मणि प्रवर्त्तमान: स्वं कर्म जहाति, यथा– तक्षा राजकर्मणि प्रवर्त्तमान: स्वं कर्म जहाति, एवं युक्तं यद्राजा पुरुषार्थे प्रवर्त्तमान: स्वमर्थं जह्यादिति भाष्यादेतत्कल्पनेऽपि पूर्वपदार्थ एव जहत्स्वार्थत्वं लभ्यते इति।[४]

राजपदार्थे ऋद्धान्वयापत्ति: पृथगुपस्थितिसत्त्वात्। अतो वृत्तौ विशिष्टशक्तिस्वीकारेण राजपुरुष इत्यादौ ऋद्धादीनां राजपदार्थेनान्वयाभाव:। किञ्चास्मिन् पक्षे पूर्वपदार्थप्रधानत्वादिलक्षणमप्यनुपपन्नम्।।

**अजहत्स्वार्था–** न जहति पदानि स्वार्थं यस्यां साऽजहत्स्वार्था। अवयवार्थसंवलितसमुदायार्थबोधिकात्वमजहत्स्वार्थत्वम्। रथन्तरं सामभेद:, शुश्रूषासेवा इति पूर्वस्या उदाहरणम्। राजपुरुष इत्यादावन्त्याया:।

समासादिपञ्चसु विशिष्टे एव शक्तिर्नत्ववयवे। रथन्तरं, सप्तपर्ण:, शुश्रूषेत्यादौ अवयवार्थानुभवाभावात्। अत एव भाष्ये व्यपेक्षापक्षमुद्भाव्य 'अथैतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो

१. वैभू. सार (मूल), पृ. २६८
२. तत्रैव पृ. २७०, कारिका ३०
३. वै.भू. सार (मूल), पृ. २७१–७२
४. वै.भू. सार दर्पण व्याख्यायां, पृ. २७१

विशेषः स वक्तव्यः'[१] इत्युक्तम्।

यत्तु व्यपेक्षावादिनां नैय्यायिकमीमांसकादीनाम्मते– 'राजपुरुषादिसमासादौ नातिरिक्ता शक्तिः, कल्पकाभावात्, क्लृप्तराजादिपदादेवार्थोपस्थितिसम्भवे तत्कल्पनस्य गौरवपराहतत्त्वाच्च। क्लृप्तशक्तित्यागोऽप्यप्रामाणिकः कल्पयेत तथा चाऽऽकांक्षादिवशात् क्लृप्तशक्त्यैव विशिष्टार्थबोधः।'[२]

राजपुरुष इत्यादौ राजपदादेः सम्बन्धिनि लक्षणयैव राजसम्बन्ध्यभिन्नः पुंरुष इति बोधात्। व्यपेक्षात्वं हि समस्तपदानां परस्परसाकांक्षत्वम्।

अथ चोक्तकारिकायां प्रसङ्गाद् वृत्तिभेदमाह। भेदः संसर्ग उभयं चेति वाच्यव्यवस्थितेः। समासादिवृत्तेर्भेदः भेदसंसर्गादिरूपार्थकृतमित्यर्थः। तदुक्तं भाष्ये– 'सामर्थ्यन्नाम भेदः संसर्गो वा। अपर आह–भेद संसर्गौ वा समार्थ्यमिति। यदि वृत्तौ भेदसंसर्गौ न स्याताम् तदा सामर्थ्यमेव न स्यात् तदात्मकत्वात्सामर्थ्यस्येत्यतस्तदर्थकत्वं तस्येति तद्भावः।'[३]

वस्तुतो राजपुरुष इत्यनेन प्रथमतः राजसम्बन्धवानित्येव बोधो भवति। 'अराजकीयभिन्नः' इत्यादिभेदस्तूत्तरकालमुपतिष्ठते। अतः प्रथमोपस्थितरूपान्तरङ्गत्वात् संसर्ग एव वाच्यः, भेदस्तु तात्पर्यग्राहकसापेक्षत्वेन बहिरङ्गत्वान्न वाच्यः, किन्त्वार्थिक एवेति भावः। संसर्गस्य भेदाविनाभावित्वात् संसर्गेण हेतुना भेदोऽनुमीयते इति। तथा चानुमानगम्य एव भेदो न तु शाब्दः।

अत्र वृत्त्या भेद एव उत संसर्ग एव वाच्य इत्यनयोर्मध्ये एकतरनिश्चायकप्रमाणाभावादाह–उभयं चेति। तेन भेदः संसर्गश्चेत्युभयं वाच्यमिति भावः। तथा चाराजकीयभिन्नो राजसम्बन्धवांश्चायमिति बोध उपपद्यते।

नैय्यायिकाः मीमांसकाश्च व्यपेक्षावादिनः सन्ति। एतेषां मते समासे काचित् विशिष्टा शक्तिर्नास्ति। तत्र लक्षणया विशिष्टार्थबोधः संपद्यते। परन्तु वैय्याकरणाः समासे काञ्चिद् विशिष्टामतिरिक्तां वा शक्तिं मन्यन्ते। शब्दशक्तिप्रकाशिकायां पाणिनिसम्प्रदायमभिलक्ष्य उक्तम् 'व्यञ्जकसुपः सत्वेऽपि संख्या न वाच्या इति तु समास शक्तिवादिनः पातञ्जलाः'।[४] भाष्ये तु– 'व्यपेक्षापक्षं मतान्तरेणोपन्यस्यैकार्थीभाव एव समर्थितः।'[५] वैयाकरणाशिरोमणिः भट्टनागेशस्तु स्पष्टमभिधत्ते– "समासादि पञ्चसु विशिष्टा एव शक्तिर्नत्ववयवे"[६], रथन्तरं सप्तपर्ण इत्यादावयवार्थानुभवाभावात्। अत एव भाष्ये

---

१. म.भा. २/१/१
२. वै.भू. सार (मूल), पृ. २७२
३. म.भा. २/१/१
४. शब्दशक्तिप्रकाशिकायां
५. म.भा. २/१/१
६. प.ल.म.

व्यपेक्षापक्षमुद्भाव्य 'अथैतस्मिन् व्यपेक्षायां योऽसावेकार्थीभावविशेष स वक्तव्य इत्युक्तम्।'[१] विशिष्ट शक्त्यस्वीकारे धवखदिरौ, निष्कौशाम्बिः, इत्यादिषु साहित्यनिष्क्रान्तपूर्णेत्यादयोऽर्थाः वाचनिका वाच्या इति भाष्याशयः।

अथ च व्यपेक्षावादस्य भाष्यविरूद्धत्वात् तन्मूलकं पूर्वपदार्थप्रधानः इत्याद्युत्सर्गस्याप्ययुक्तत्वात्, किन्तु 'रेखागवय' न्यायमाश्रित्य उत्सर्गोऽपि परम्परयैव बोधक इत्याशयेनोक्तञ्च कौण्डभट्टेन–

**"समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्।**
**बहूनां वृत्तिधर्माणां वचनैरेव साधने।।**
**स्यान्महद् गौरवं तस्मादेकार्थीभाव आश्रितः।।"**[२]

'समास इति–वृत्तिमात्रोपलक्षणम्, समर्थः पदविधिः' इत्यत्र पदमुद्दिश्य यो विधीयते समासादिः सः समर्थः। विग्रहवाक्यार्थाभिधाने शक्तः सन् साधुरिति सूत्रार्थस्य भाष्याल्लाभात्। पदोद्देश्यकविधित्वञ्च कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरुपासु पञ्चस्वपि वृत्तिष्वस्त्येव।"[३] अर्थात् समासेऽवयवशक्त्यैव निर्वाहे पङ्कजशब्दे पङ्कजनिकर्तुरपि योगादेवोपस्थितौ तत्राऽपि समुदायशक्तिर्न सिद्धयेत। न च पद्मत्वरूपेणोपस्थितये सा कल्प्यत इति वाच्यम्, चित्रग्वादिपदेऽपि स्वामित्वेनोपस्थितये तत्कल्पनाऽऽवश्यकत्वात्। लक्षणस्यैव तथोपस्थितिरिति चेत्, पङ्कजपदेऽपि सा सुवचा। अतः समासेऽतिरिक्तैव शक्तिः पङ्कजशब्दवदिति सिद्धयति।

**अयमाशयः–** समासे पङ्कजशब्दवदतिरिक्ता शक्तिः भवति। पङ्ज्जातमिति पङ्कजम्, अनया व्युत्पत्त्या मीनशैवालादीनां नानार्थानां बोधसम्भवः, तमवरोद्धुं 'पद्मत्व' अर्थबोधिका शक्तिः स्वीक्रियते। तथैव समासेऽपि समुदायस्यार्थबोधिकातिरिक्तां शक्तिं स्वीकुर्मः।

यदि समुदाये शक्तिं न स्वीकुर्मः तदा पङ्कजपदेन शैवालत्व कुमुदत्वादिरूपेण नानापदार्थानामुपस्थितिः तथा च विशेषणलिङ्गसंख्यादीनामप्युपस्थितिः। विशेषणे तदन्वयवारणाय (राजादिपदार्थे) 'सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो न' इत्यादिवचनानि तन्मते स्वीक्रियन्ते, तदा महद्गौरवं स्यात्। अतः समुदाये शाब्दिकैः अतिरिक्ता शक्तिः स्वीक्रियते। यथा पङ्कजशब्दे अकामैरपि तैः (नैयायिकमीमासकैः) विशिष्टपद्मत्वेन पद्मबोधनाय विशिष्टा शक्तिः स्वीक्रियते, तं न्यायात् तेषां राजादिपदार्थेऽन्वयवारणाय 'सविशेषणानां– इत्याश्रित्य चित्रग्वादिसमासेऽपि विशिष्टा शक्तिः स्वीकार्या। परञ्च विशिष्टशक्त्यस्वीकारे 'राज्ञः पुरुष' इत्यत्रेव राजपुरुष इत्यत्राऽपि ऋद्धस्येत्यादि विशेषणान्वयः स्यात्, राजपदेन स्वतन्त्रोपस्थितिसत्वात्।

---

१. म.भा. २/१/१

२. वै.भू. सार कारिका ३१, ३२, पृ. २७७

३. तत्रैव मूले

ननु सविशेषणानां वृत्तिर्न इति वचनान्न विशेषणाद्यन्वयः। विभाषावचनञ्च कृतमेवेत्याशङ्कां समाधत्ते–वचनैरेवेति।[१] न्यायसिद्धमेव 'विभाषा' सूत्रम्।[२] व्यपेक्षाविवक्षायां वाक्यस्यैकार्थीभावे समासस्येति स्वभावादेव प्रयोगनियमसम्भवात्। सविशेषणेत्यपि विशिष्टशक्तौ राज्ञः पदार्थैकदेशतयाऽन्वया-सम्भवान्न्यायसिद्धमिति भावः।[३]

अथ च व्यपेक्षावादिपक्षे प्रथम दूषणमाह– विशिष्टशक्त्यस्वीकारे धवखदिरौ, निष्कौशाम्बिः, गोरथः, घृतघटः, गुडधानाः, केशचूडः, सुवर्णालङ्कारः, द्विदशाः, सप्तवर्णा इत्यादावितरेतयोगनिष्क्रान्तयुक्त-पूर्णमिश्रसंघातविकारसुच्प्रत्ययलोपवीप्साद्यर्थो वाचनिको वाच्य इति महत्वगौरवं स्यादित्याह–"[४]

**"चकरादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम्।**
**कर्त्तव्यं ते न्यायसिद्धं त्वस्माकं तदिति स्थितिः।।"[५]**

आदिना घनश्यामः, हंसगमनः, इत्यादाविवादीनां पूर्वोक्तानाञ्च संग्रहः। दूषणान्तरमाह– बहुव्युत्पत्तिभञ्जनमिति। **अयमाशयः–** चित्रगुः, इत्यत्र स्वाम्यादिप्रतीतिरनुभवसिद्धा। न च तत्र लक्षणा, 'प्राप्तोदको ग्रामः' इत्यादौ तदसम्भवात्, 'प्राप्तिकर्त्रभिन्नमुदकम्' इत्यादि बोधोत्तरं तत्सम्बन्धिग्रामलक्षणायामपि 'उदककर्तृकप्राप्तिकर्म ग्रामः' इत्यर्थालाभात्। एवमेव ऊढरथः, उपहृतपशुः, इत्यादावपि ज्ञेयम्।[६]

**अयमाशयः–** व्यपेक्षावादिनाम्मते धवखदिरौ' इत्यादिस्थलेषु चकारादीनां लोपो भवति। अथ च समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयतिरिक्तसम्बन्धोऽव्युत्पन्न इत्यादीनां व्युत्पत्तीनां भञ्जनं स्यात्। परमस्माकं विशिष्टशक्तिवादिनाम्मते समुच्चयाद्यर्थो न्यायसिद्धः शब्दशक्तिस्वभावात्। अत एवास्माकीनां नये चकारादीनां पदानां न लोपः, न व्युत्पत्तिभञ्जनम्। तदर्थमेवैकार्थीभावादिनाम्मते लाघवम्।

**दूषणान्तरं परिगणयति–** चकारादि निषेधोऽथ...इति। अत्र चकारादिपदे आदिपदेन घन इव श्यामः, घनश्याम इत्यत्र इवपदलोपः कृतः। 'उपमानानि सामान्यवचनैः' इति सूत्रेण उपमानवाचि घनशब्दस्य सादृश्यवाचि इवादि पदेन समासो भवति, समासे च सति इवलोपः।

परमेकार्थीभाववादिनाम्मते घनगतश्यामत्वसदृशश्यामत्ववानस्य विशिष्टार्थस्य लाभः समासशक्त्या सुतरां सिद्धः। अत एव इवादीनां पदानां लोपो न भवति, परं व्यपेक्षामते इवपदस्य लोपो वक्तव्यः।

---

१. वै.भू. सा. मूल, पृ. २८२-८३
२. तत्रैव, पृ. २८४, कारिका ३३
३. तत्रैव, पृष्ठे
४. वै.भू. सा. मूल, पृ. २८२-८३
५. तत्रैव, पृ. २८४, कारिका ३३
६. तत्रैव, पृष्ठे

एवं प्रकारेण निष्कौशाम्बिः, चित्रगुः, हंसगमनः, प्राप्तोदको ग्रामः, इत्यादिषु स्थलेष्वपि विज्ञेयम्।[1]

नैयायिकमीमांसकादयः शक्तिं नाभिप्रयन्ति। तेषामयमभिप्रायः समासे नास्ति शक्तिः। राजपुरुष इत्यादौ राजपदादेः सम्बन्धिनि लक्षणयैव राजसम्बन्ध्यभिन्नः पुरुष इति बोधोपपत्ते इत्यादिरीत्या शक्तिखण्डनाय बहुप्रपञ्चितं तैः। अत्रोच्यते– समासे शक्त्यस्वीकारे तस्य प्रातिपदिकसञ्ज्ञा न स्यातर्थवत्वाभावात्, 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्'[2] इत्यनेन अर्थवत एव प्रातिपदिकसञ्ज्ञाविधानात्, न च 'कृत्तद्धितसमासाश्च'[3] इत्यत्र समासग्रहणात् सा प्रातिपदिकसञ्ज्ञेति वाच्यम्, समासग्रहणम् नियमार्थत्वस्य भाष्यादौ स्वीकृतत्वात्। ये दार्शनिकाः समासे लक्षणमुरीकुर्वन्ति, तन्न समीचीनम्। समासवाक्ये शक्त्यभावेन शक्यसम्बन्धलक्षणायाऽप्यसम्भवेन लाक्षणिकार्थवत्त्वस्याप्यभावात्। यदि 'तिप्तस्झि'[4] इत्यारभ्य 'ङयोस्सुप्' इति तिप्प्रत्याहारो भाष्यासिद्धस्तमादाय 'अतिप्प्रातिपदिकम्' द्वयोः सूत्रयोः स्थाने क्रियते तथा सत्यनेन न्यासेन समासस्य प्रातिपदिकसञ्ज्ञा सिद्धौ समासग्रहणं नियमार्थम्। तथा चातिप् सुप्तिङन्तभिन्नं प्रातिपदिकमित्यर्थलाभे समासस्यापि सिद्धौ नियमार्थतया स्यादिति यद्युच्यते प्रत्येकं वर्णेषु सञ्ज्ञावारणायार्थवत्त्वस्यावश्यकत्वे समासस्य प्रातिपदिकत्त्वानुपपत्तिः। अतः समासस्य प्रातिपदिकसञ्ज्ञा कार्यानुपपत्त्याऽर्थवत्त्वरूपं शक्तिमत्त्वं स्वीकार्यम्। समासे शक्त्यस्वीकारे 'चित्रगुमानय' इत्यादावमर्थ कर्मत्वस्यान्वयानुपपत्तिः, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्व व्युत्पत्तेः। प्रकृते समासे शक्त्यस्वीकारे चित्रगुशब्दस्य प्रकृतित्वेन तस्य त्वन्मतेऽर्थाभावात्। यदि 'चित्रगुः' इत्यादौ गोपदस्य लक्षणायामुक्तव्युत्पत्तेः सन्निहितपदार्थगतस्वार्थबोधकत्वमिति स्वरूपं कल्प्यते, तदा 'चित्रगु' इत्यादौ सन्निहितं पदं गोपदम्, तच्च गोपदम् प्रत्ययसन्निहितमेव, अतो नास्ति दोषः। उपकुम्भम्, अर्द्धपिप्पली, इत्यादौ पूर्वपदार्थे विभक्त्यर्थान्वयेन व्यभिचारात्।

अथ च समस्यमानपदार्थगतस्वार्थबोधकत्वम् समासोत्तरविभक्ते इति स्वीक्रियते, तदा नास्ति दोषः इति चेन्न। अक्लृप्तकल्पनां क्लृप्तशक्तिः, क्लृप्तव्यत्पत्तित्यागञ्चापेक्ष्य समुदायशक्तिः कल्पनस्यैवोचितत्त्वात्। अतः समासशक्तिवादः वैयाकरणसम्मतः समीचीनः। व्यपेक्षावादिनाम्मतानि भूषणादिग्रन्थेषु दोषगुणैः समीक्ष्य विशदतया खण्डितानि। समासशक्तिवादस्य समर्थनं कृतमित्यलम्।

---

१. पा.सू. २/१/५५

२. पा.सू. १/२/४५

३. पा.सू. १/२/४६

४. पा.अ. ३–४–७८

# शब्दतत्त्वविवेचनम्

**श्रीमती अरुणा आर्या**

भारतीयकाव्यशास्त्रस्य महती परम्परा विद्यते। आभरतात् क्षेमेन्द्रपर्यन्तानां सिद्धान्तानां प्रतिपादकैः विद्वद्भिः काव्यात्मसम्बन्धे विविधाः विचाराः प्रस्तुताः, परं प्रायशः सर्वैरेव स्वीकृताः यद् शब्दार्थौ काव्यस्य शरीररूपेण तिष्ठतः।

शृङ्गारप्रकाशनामकग्रन्थे प्रथमप्रकाशस्य प्रारम्भे इयं जिज्ञासा कृता यद् विद्वांसः शब्दार्थौ सहितौ काव्यम् इत्यामनन्ति। तत्र कः शब्दः? इत्युक्ते सति भोजराजेन प्रोक्तम्- 'येनोच्चारितेनार्थः प्रतीयते'।[१] स च द्वादशधा-

१. प्रकृतिः, २. प्रत्ययः, ३. उपस्कारः, ४. उपपदम्, ५. प्रातिपदिकम्, ६. विभक्तिः, ७. उपसर्जनम्, ८. समासः, ९. पदम्, १०. वाक्यम्, ११. प्रकरणम्, १२. प्रबन्धः।

महाभाष्ये प्रथमाह्निके कः शब्दः? इति जिज्ञासायां ऋषिणा पतञ्जलिना प्रोक्तं 'किं यत्तत्सास्नालाङ्गूलककुदखुरविषाण्यर्थरूपं स शब्दः? नेत्याह। द्रव्यं नाम तत्। यत्तर्हि तदिङ्गितं चेष्टितं निमिषितं स शब्दः? नेत्याह। क्रिया नाम सा। यत्तर्हि तच्छुक्लो, नीलः, कृष्णः, कपिलः, कपोतः इति स शब्दः। नेत्याह। गुणो नाम सः। यत्तर्हि तद्भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं स शब्दः। नेत्याह आकृतिर्नाम सा। कस्तर्हि शब्दः? उक्तम् ऋषिणा-

'येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां संप्रत्ययो भवति स शब्दः'।[२] अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते। तद्यथा शब्दं कुरु, मा शब्दं कार्षीः, शब्दकार्ययं माणवक इति। ध्वनिं कुर्वन्नेवमुच्यते। तस्माद् ध्वनिः शब्दः।

आनन्दवर्धनाचार्येण ध्वनेः परिभाषां कुर्वता उक्तम्-

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।।**[३]

'यत्रार्थो वाच्यविशेषः वाचकविशेषः शब्दो वा तमर्थं व्यङ्क्तः स काव्यविशेषो ध्वनिरिति। अनेन वाच्यवाचकचारुत्वहेतुभ्य उपमादिभ्योऽनुप्रासादिभ्यश्च विभक्त एव ध्वनेर्विषय इति दर्शितम्।[४]

---

१. शृङ्गारप्रकाशे प्रथमप्रकाशः, पृ. २

२. किम् ........ शब्दः महाभाष्ये प्रथमोऽध्यायः प्रथमाह्निकम्

३. ध्वन्यालोकः प्रथमोद्योतः का. सं. १३

४. ध्वन्यालोकः प्रथमोद्योतः

ध्वनेर्भेदोऽपि प्रदर्शितः आचार्येण-

स चासावविवक्षितवाच्यो विवक्षितान्य-

**परवाच्यश्चेति द्विविधः सामान्येन॥**

तत्रास्योदाहरणम् -

**सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः।**
**शूरश्चकृतविद्यश्च यश्च जानाति सेवितुम्॥**

द्वितीयस्यापि -

**शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः।**
**तरुणि येन तवाधरपाटलं दशति विम्बफलं शुकशावकः॥**

पाणिनीयशब्दार्थसम्बन्धसिद्धान्ते शब्दस्वरूपविषये प्रोक्तं पाणिनिना-

**येनोच्चारिततत्त्वेन अर्थबोधो विजायते।**
**स हि शब्दोऽवगन्तव्यः ध्वनिर्वा शब्द उच्यते॥**[१]

**स्फोटो नादैरभिव्यक्तः शब्दोऽर्थप्रतिपादकः।**
**स्फोटोऽर्थान्तरो बौद्धः ध्वनिः शब्दस्य वै गुणः॥**

परमलघुमञ्जूषायामप्युक्तम्-'ध्वनिस्तु द्विविधः, प्राकृतो वैकृतश्च।[२] प्रकृत्या अर्थबोधनेच्छया स्वभावेन वा जातः स्फोटव्यञ्जकः प्रथमः प्राकृतः, तस्मात् प्राकृताज्जातो विकृतिविशिष्टश्चिरस्थायी निवर्तको वैकृतिकः। हरिरप्याह-

**शब्दस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।**
**शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः॥**
**ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते॥**

वैयाकरणभूषणसारे श्रीमत्कौण्डभट्टेन शब्दविषये कथितम् 'पदपदार्थयोर्योऽर्थः सः शब्दः।[३] वैयाकरणमते स्फोट एक एव शब्दात्मकब्रह्मरूपः। शब्दः स्फोटस्य वाचकत्वम्। स्फुटति प्रकाशतेऽर्थोऽस्मादिति स्फोटोऽर्थवाचकः शब्दः। तत्र वर्ण-पद-वाक्य-अखण्डपद- अखण्डवाक्य-वर्णजाति-पदजाति-वाक्यजाति-इत्यादिभेदैः अष्टप्रकाराः सन्ति। द्विविधः शब्दः वर्णो ध्वनिश्च। शब्दत्वमुभयानुगतम्।

---

१. पाणिनीयशब्दार्थसम्बन्धसिद्धान्तः श्लो. ३६,३८

२. ध्वनिस्तु ......... भिद्यते। परमलघुमञ्जूषा, स्फोटनिरूपणम्, पृ. १०१

३. वैयाकरणभूषणसारः धात्वर्थनिर्णयः

वर्णविशेषा: ककारादय:, ध्वनिविशेषा: शङ्खघोषादय:। ध्वन्यात्मकश्च शब्दो वायु:। स च वायौ कर्णविवरं प्राप्ते संयुक्तसमवायेन श्रोत्रेन्द्रियं संस्कृतस्य तेन श्रोत्रेण गृह्यमाण: कदाचित् कत्वादिधर्मरहित: शङ्खघोषादिषु केवलो गृह्यते। कदाचित् च वर्णानाभिव्यञ्जयन् वर्णोपश्लिष्ट एव प्रतीयते। वाक्यपदीये शब्दस्वरूपविषये भर्तृहरिणा प्रोक्तम्-

**शब्द: कारणमर्थस्य स हि तेनोपजन्यते।**
**तथा च बुद्धिविषयादर्थाच्छब्द: प्रतीयते।।**[१]

हेलाराजेन वाक्यपदीये तृतीयकाण्डे कथितम्-

'अयं गौरयमर्थ इति शब्दार्थयोरभेदावभासनात् स्वरूपमभिदधदेव शब्दोऽर्थमभिधत्त इति निश्चीयते। स्वरूपाविवेकेनैव ह्यर्थपरामर्शोऽभिधानमुच्यते।'[२]

'न हि विवक्षितोऽर्थ: शब्दसम्भेदशून्य: अन्त: सञ्जल्परूपस्य तस्य प्रतिभानात्। अनादिशब्दभावनानुविद्धं हि तिरश्चामपि ज्ञानम्। अतएव स्थानकरणव्यापारादभिव्यक्तोऽर्थ- स्वरूपशबल: शब्द: श्रोतृभिरवधारित:, तथैव स्वरूपाच्छुरणयार्थमवगमयति।[३]

वाक्यपदीये प्रथमे काण्डेऽपि प्रोक्तम्-

**द्वावुपादानशब्देषु शब्दौ शब्दविदो विदु:।**
**एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते।।**[४]

उपादीयते येनार्थ: स्वरूपेऽध्यारोप्यते तद्भावमिवापाद्यते स उपादानशब्द:।[५]

द्वौ शब्दौ प्रतीयेते। एक: शब्दानामभिव्यक्तौ निमित्तम्, अपरश्च प्रत्यायक इति।[६]

तत्रार्थप्रत्ययरूपेण कार्येण तत्कारणत्वेन शब्दोऽनुमीयते स्वरूपेण प्रत्यक्षोऽपीति रीत्या स्फोटात्मकशब्दाभिव्यञ्जको ध्वनिविशेषरूप एक: शब्द: अर्थप्रत्यायकश्च स्फोटपदाभिधेयोऽपर इति द्वौ शब्दौ।[७]

वक्रोक्तिजीविते कुन्तकाचार्येण शब्दस्वरूपं स्पष्टं कुर्वन् प्रोक्तम्-

---

१. वाक्यपदीयम्, ३.३.२
२. वाक्यपदीयम्, हेलाराजेन ३.३.२ पृ. २३६
३. न हि ...... अवगमयति। हेलाराजेन ३.३.३२
४. वा. प. प्रथमकाण्डे श्लो. ४४
५. वा. प. श्रीरघुनाथशर्मा १/४४
६. वा. प. अम्बाकर्त्रीव्याख्या १/४५ पृ. १०२
७. तत्र ............. शब्दौ। वा. प. अम्बा. १/४४ पृ. ९८

**शब्दो विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि।**
**अर्थः सहृदयाह्लादकारिस्वस्पन्दसुन्दरः॥**[१]

स शब्दः काव्ये यस्तत्समुचितसमस्तसामग्रीकः तथा विवक्षितार्थैकः वाचकः भवति। विवक्षितो योऽसौ वक्तुमिष्टोऽर्थस्तदेकवाचकस्तस्यैकः केवल एव वाचकः। अपरेषु तद्वाचकेषु बहुष्वपि विद्यमानेषु विवक्षितार्थस्य प्रकाशकः शब्द एव काव्ये शब्दो भवति। क्वचित् सामान्याभिधाय्येव शब्दः सहृदयहृदयहारितां प्रतिपद्यते। यत्र विशेषात्मना वस्तु प्रतिपादयितुमभिमतं तत्र विशेषाभिधायकमेवाभिधानं शब्दमेव निबघ्नन्ति कवयः। यथा–

**द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः।**
**कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी॥**[२]

अत्र इयं सम्प्रति च अतीव मनोहरः रमणीयश्च शब्दः। 'प्रार्थना' शब्दोऽपि अत्यन्त मनोरमः। यः संयोगेन तस्य समागमवाच्यतायाः कदाचित् वहनं न करोति। पुनः इयं प्रार्थना अत्यन्तोच्चकुले उत्पन्नायै कलङ्ककारिणी अस्ति। 'कपालिनः' शब्द अत्र जुगुप्सास्पदत्वमस्ति तथा च अद्भुतवक्रतां धरयति।

महाकविमङ्खकप्रणीतसाहित्यमीमांसायां कुन्तकाचार्यानुसारं शब्दलक्षणमेवं प्रतिपादितम्–

**वाच्योऽर्थो वाचकः शब्दः प्रसिद्धमिति यद्यपि।**
**तथापि काव्यमार्गेऽस्मिन् परमार्थोऽयमेतयोः॥**[३]

यथा–

**कल्लोलवेल्लितदृषत्परुषप्रहारै रत्नान्यमूनि कमलालयमावमंस्थाः।**
**एकेन किं न विहितो भवतः स नाम याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि॥ २/३७**

अत्र रत्नसामान्योत्कर्षाभिधानमुपक्रान्तम्। कौस्तुभेनेति रत्नविशेषाभिधायीशब्दस्त- द्विशेषोत्कर्षाभिधानम् उपसंहरतीति प्रक्रमोपसंहारवैषम्यं न शोभातिशयमावहति। न चैतद् वक्तुं शक्यते–'यः कश्चिद्विशेषे गुणग्रामगरिमा विद्यते स सर्वसामान्येऽपि सम्भवत्येवेति।

श्रीमत् भामहकृत–काव्यालंकारे शब्दस्वरूपम् एवं वर्णितम्–

**प्रतीतिरर्थेषु यतस्तं शब्दं ब्रुवते परे।**
**धूमभासोरपि प्राप्ता शब्दतान्यानुमां प्रति॥**[४]

---

१. वक्रोक्ति. १/९ पृ. ३५

२. वक्रोक्ति १/२७ पृ. ३८ ,

३. साहित्यमीमांसा द्वितीयप्रकरणम् श्लो. ४७

४. काव्यालङ्कारः षष्ठपरिच्छेदः सप्तमश्लोकः

**नन्वकारादिवर्णानां समुदायोऽभिधेयवान्।**
**अर्थप्रतीतये गीतः शब्द इत्यभिधीयते।।६/८**

आचार्यमम्मटेन 'स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा'[१] इत्युक्त्वा शब्दस्य भेदत्रयः कृतः। तत्र 'साक्षात्संकेतितं योऽर्थमभिधत्ते स वाचकः'।[२]

इहागृहीतसंकेतस्य शब्दस्यार्थप्रतीतेरभावात्संकेतसहाय एव शब्दोऽर्थविशेषं प्रतिपादयतीति यस्य यत्राव्यवधानेन संकेतो गृह्यते स तस्य वाचकः।

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।**
**अन्योऽर्थो लक्ष्यते यत्सा लक्षणाऽऽरोपिता क्रिया।।**[३]

कर्मणि कुशलः इत्यादौ दर्भग्रहणात् अयोगात् 'गंगायां घोषः' इत्यादौ च गङ्गादीनां घोषादि आधारत्त्वासंभवात् मुख्यार्थस्य बाधे विवेचकत्वादौ सामीप्ये च संबन्धे रूढितः प्रसिद्धेः तथा गङ्गातटे घोष इत्यादेः प्रयोगात् येषां न तथा प्रतिपत्तिः तेषां पावनत्वादीनां धर्माणां तथा प्रतिपादनात्मनः प्रयोजनाच्च मुख्येन अमुख्योऽर्थो लक्ष्यते यत् स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा।

**तत्र व्यापारो व्यञ्जनात्मकः।**[४]

तत्र पावनात्वादिप्रयोजने विषये व्यापारः शब्दस्य वृत्तिः व्यञ्जनात्मकः व्यञ्जकस्वरूप इति।

श्रीमत्शारदातनयविरचिते भावप्रकाशने शब्दस्वरूपं मम्मटानुसारं कृतम्-

**शब्दस्त्रिधा वाचकश्च तथा लाक्षणिकोऽपि च।**
**व्यञ्जकश्च तदर्थश्च त्रिधा वाच्यादिभेदतः।।**[५]

कुमारिलभट्टानुसारं वाच्याद्यार्थातिरिक्तं चतुर्थप्रकारस्य 'तात्पर्यार्थः' वाक्यार्थः भवति। अत्र पूर्वं पदैः पदार्थानां प्रतीतिः भवति अनन्तरञ्च तेषां पदार्थानां परस्परं सम्बन्धो भवति यत् पदैः न भवति परन्तु वक्तुः तात्पर्यानुसारं भवति अतोऽयं तात्पर्यार्थः उच्यते। तदेव च वाक्यार्थो भवति। उक्तंञ्च यथा-

**'तात्पर्यार्थः पदार्थेभ्यो वाक्यार्थो वाक्यार्थोऽस्तीति केचन।'**[६]

---

१. काव्यप्रकाशः द्वितीयः उल्लासः पृ. २५
२. काव्यप्रकाशः द्वितीयः उल्लासः पृ. २५२
३. काव्यप्रकाशः द्वितीयः उल्लासः
४. काव्यप्रकाशः द्वितीयः उल्लासः
५. भावप्रकाशने षष्ठोऽधिकारः
६. भावप्रकाशने षष्ठोऽधिकारः

भावप्रकाशने अन्यदपि उक्तम्-

**यस्य यत्राव्यवहित संकेतो गृह्यते स्फुटम्।**
**तस्य वाचकः शब्द इति शब्दानुशासनम्।।**[१]

श्रीमद्भट्टोजिदीक्षितेनापि प्रौढ़मनोरमायां निगदितम् स्फोट एवेति। पदरूपो वाक्यरूपो वेत्यर्थः। लोकानां तत्रैव शक्तिग्रहेण बोधादिति भावः। अतएव तस्य परमार्थत्वं लोके बोधजनकत्वात्। शास्त्रेण प्रकृतिप्रत्ययविभागव्युत्पादनेन विशिष्टपदस्येव। तत्तदर्थबोधनद्वारा विशिष्टे पदे विशिष्टार्थबोधकत्वमेव बोध्यते। उपोच्चारितं पदं चोपपदम्, पदं च सुप्तिङन्तमिति।[२]

विश्वनाथकविवरेण साहित्यदर्पणे शब्दस्य परिभाषा पदशब्देन कृता –

**'वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः।'**[३]

अर्थात् प्रयोगयोग्याः सुप्तिङ्विभक्तियुक्ताः मिथोऽन्वयरहितः य एकोऽर्थः तत्प्रतिपादकाः स्वरव्यञ्जनाख्या अक्षराः पदम्। यथा-

घटः इति। घट इत्यत्र घकारोत्तरवर्ती अकारः तथा टकारोत्तवर्ती अकारः विसर्जनीयश्चेत्थं वर्णसंघातेन अनन्वितः कम्बुग्रीवादिमान एकः पदार्थोऽवबुद्धयते। पदलक्षणे पदकृत्यं प्रदर्शयति। प्रयोगार्हत्वं विभक्त्यन्तत्वं तच्च सुब्विभक्तियुक्तत्वं तिङ्विभक्तियुक्तत्वं वा तेन च प्रातिपदिकस्य अर्थवच्छब्दस्य व्यवच्छेदः। अत्र प्रातिपदिकशब्देन भूवाप्रभृतिधातोश्च ग्रहणं तथा च 'प्रयोगार्ह' पदेन तिङ्विभक्तिरहितस्य 'भूवा' प्रभृतिधातोश्च व्यवच्छेदो भवतीत्येषोऽर्थोऽपि समुचितो भवति। अनन्वितपदेन वाक्यमहावाक्ययोः व्यवच्छेदः इति। अयं भावः वाक्यानि महावाक्यानि च अन्वितानि भवन्ति। एकेति साकाङ्क्षानेकपदवाक्यानां ग्रहणम्। अर्थबोधकाः इति कचटतपेत्यादीनां ग्रहणम्। साहित्यदर्पणे शब्दस्य अभिधाः लक्षणा व्यञ्जना चेति तिस्रः शक्तयः वर्णितास्सन्ति।

कविवररुद्रैटेनापि 'ननु शब्दार्थौ काव्यम्' इति भणितम्। अथ शब्दः किमुच्यते इत्याह-

**ननु शब्दार्थौ काव्यं शब्दस्तत्रार्थवाननेकविधः।**
**वर्णानां समुदायः स च भिन्नः पञ्चधा भवति।।**[४]

अर्थात् शब्दः तत्रार्थवाननेकविधो वर्णानां समुदायः इति। कीदृशानां वर्णानाम् इति? अकारादीनां वर्णानां समुदायः। यथा-कीदृशः शक्रः। वज्री, सहस्राक्षः। वर्णानां इति बहुवचनमतन्त्रम्। तेनैकवर्णो द्विवर्णश्च शब्दः सिद्धो भवति। सोऽपि अनेकविधः। तद्यथा- कश्चिद्व्यक्तैकार्थावयवः यथा घट इति।

---

१. भावप्रकाशने षष्ठोऽधिकारः
२. प्रौढ़मनोरमा अजन्तपुल्लिङ्गप्रकरणम्
३. साहित्यदर्पणः, द्वितीय परिच्छेदः
४. काव्यालङ्कारः २/१

अत्र हि घकारादयो वर्णा व्यक्ताः संभूय कुम्भारख्यमेकमर्थमाहुः। कश्चिद् व्यक्तपृथगर्थावयवः। यथा एति पचतीति वा। अत्र हि धातुना क्रियाभिधीयते प्रत्ययेन तु कर्ता कश्चिदव्यक्तैकर्थावयवः। यथा संपदादित्वात् क्विपि कृते 'अवनं अः' इति पदम्। अत्र तु अकारवकारौ कृतादेशौ क्षीरनीरवदेकीभूताववन-क्रियामेकमेवार्थमाहतुः। कश्चिदव्यक्तपृथगर्थावयवः। यथा ऐः इति क्रियापदम्। अत्र हि आकारैकारौ पूर्ववदेकीभूतौ सकारश्च कृतादेशत्वादव्यक्तीभूतः पृथगर्थश्च। यत ऐकार आगतिक्रियामाह। सकारो युष्मदर्थ कर्तारमेकत्वं चेति चतुर्भेदत्वादनेकविधत्वम्। यदि वा द्रव्यजातिक्रियागुण- वाचित्वेन चातुर्विध्यम्। अन्ये तु वक्ष्यमाणवक्रोक्त्याद्यलंकारभेदेन शब्दस्यानेकविधत्वमाहुः। यदि पुनः पञ्चधा इत्युत्तर-पदापेक्षयानेकविधत्वम् उच्यते तदा पञ्चधेत्यनर्थकं स्यात्। शब्दं केचित् पाणिन्यादयः सुप्तिङन्तरूपतया द्विभेदमाहुः। केचिद् चतुर्धेति तदवयवं निरसितुमाह-स च भिन्नः पञ्चधा भवतीति। स चेति चकारः पुनरर्थे। ततश्चायमर्थः-स वर्णसमुदायात्मकः शब्दो भिन्नो भेदेन व्यवस्थापितः सन् पञ्चधा भवति। ते पुनः प्रकाराः नामाख्यातनिपातोपसर्गकर्मप्रवचनीयाः। निरुक्तशास्त्रे यास्काचार्येणापि शब्दानां चत्वारो भेदाः कृताः-'तद्यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपातश्च तानीमानि भवन्ति।[१] तत्र 'सत्वप्रधानानि नामानि।' अत्र स्त्रीपुरुषनपुंसकलिङ्गानां विभागो भवति। 'लिङ्गसंख्ययोः सद्भावः सत्त्वम्। लिङ्गसंख्यान्वितं द्रव्यं सत्त्वमित्यभिधीयते।' यास्केन आख्यातस्य लक्षणमेवं प्रदत्तम् 'भावप्रध ानमाख्यातम्।' अत्र पदेषु क्रियायाः भावस्य वा प्रधानता भवति। आख्यायते प्रधानभावेन क्रियाः गौणत्वेन द्रव्यं च यत्र तदाख्यातम्। यथा-पचति अत्र क्रियायाः बोधः भवति तथा च देवदत्तादिद्रव्यस्यापि बोधं भवति परं प्रधानतया क्रियायाः एव बोधः भवति यतः पचति इति कथनेन क्रियायाः निश्चयीकरणं भवति। आख्यातपदे लिङ्गस्य किमपि चिह्नं न भवति। अतः आख्यातं द्रव्यप्रधानं न भवति। उक्तञ्च यथा-

**क्रियावाचकमाख्यातं लिङ्गतो न विशिष्यते।**
**त्रीनत्र पुरुषान्विद्यात्कालतस्तु विशिष्यते।।**

आख्यातं चतुःप्रकारस्य भवति-कर्तरि, भावे, कर्मणि, कर्मकर्तरि च। पचति देवदत्तः इति कर्तरि। भूयते देवदत्तेनेति भावे। पच्यते ओदनः देवदत्तेनेति कर्मणि। पच्यते ओदनः स्वयमेवेति कर्मकर्तरि। एतेषु आख्यातपदेषु सर्वत्र क्रियायाः एव प्रधानतास्ति। अत एवाख्यातं भावप्रधानमुच्यते। भावस्य अवस्थाद्वयं भवति। प्रथमा साध्यावस्था द्वितीया च सिद्धावस्था। श्रीस्कन्दस्वामिमहेश्वरविरचित-निरुक्तभाष्यटीकायां भावविषये चर्चा कृता। 'भावः क्रिया तत्प्रधामाख्यातम्। आख्याते हि पचतीत्यादावुच्चारिते क्रिया प्रतीयते पाकादिः। कालो-वर्तमानादिः। पुरुषः-प्रथमादिः पचतीति परः, पचसीति युष्मदर्थः, पचामीत्यस्मदर्थः। उपग्रहः-कर्तृगामिपरगामित्वलक्षणः 'स्वरितञितः' (१/३/७२) ह्यात्मनेपदोच्चारिते ज्योतिष्टोमेन स्वर्गकामो यजेत इति कर्त्तृगामिफलत्वं प्रतीयते। परस्मैपदे तु यजन्ति याजकाः इति परगामिफलत्वम्। साधनम्-कर्मादि, पचतीति कर्ता पच्यत इति कर्म। संख्या पचतीत्येकत्वम्,

---

१. निरुक्ते प्रथमोऽध्यायः प्रथमपादः

पचत इति दित्त्वम्, पचन्तीति बहुत्वम्। एषां क्रिया प्रधानभूता, गुणभूता इतरे तदर्थत्वात्।"[१] शाकटायनानुसारं उपसर्गलक्षणमेवं प्रदत्तम्-'न निर्वद्धा उपसर्गा अर्थान् निराहुः। नामाख्यातयोः तु कर्मोपसंयोगद्योतकाः भवन्ति। आ इत्यर्वागर्थे 'प्र' 'परा' इत्येतस्य प्रातिलोम्यम्। अभि इत्याभिमुख्यम्। प्रति इत्येतस्य प्रातिलोम्यम्। अति सु इत्यभिपूजितार्थे। निर् दुर् इत्येतयोः प्रातिलोम्यम्। नि अव इति विनिग्रहार्थीयौ। उद् इत्यस्य प्रातिलोम्यम्। सम् इत्येकीभावम्। अप इत्येतस्य प्रातिलोम्यम्। अनु इति सादृश्यापरभावम्। अपि इति संसर्गम्। उप इत्युपजनम्। परि इति सर्वतो भावम्। अधि इत्युपरिभावमैश्वर्यं वा। नि उपसर्गात् पत् धातोः निपातशब्दः सिध्यति। 'उच्चावचेष्वर्थेषु निपतन्ति इति निपाताः। सामान्यतया निपातस्य प्रकारत्रयं भवति-उपमार्थकाः, कर्मोपसंग्रहार्थाः पदपूरणाश्च।

व्यक्तिविवेके नामग्रन्थे शब्दचतुष्टयवादे नामशब्दविषये निगदितम् तत्र सत्वप्रधानानि नामानि। तान्यपि बहुप्रकाराणि सम्भवन्ति। जातिगुणक्रियाद्रव्याणां तत्प्रवृत्तिनिमित्तानां बहुत्वात्। तद्यथा घटः पट इति जातिशब्दः। शुक्ल-नील इति गुणशब्दः। पाचकः पाठक इति क्रियाशब्दः। दण्डी विषाणीति द्रव्यशब्दः।[२]

वैयाकरणसिद्धान्तलघुमञ्जूषायां नागेशभट्टेन शब्दः प्रमाणत्वेन स्वीकृतः। तन्मते 'तत्राप्तोपदेशरूपः शब्दः प्रमाणम्। आप्तोनामानुभवेन वस्तुतत्त्वस्य कात्स्न्र्येन निश्चयवान् रागादिवशादपि नान्यथावादी यः सः इति चरके पतञ्जलिः।[३]

तत्रागृहीतवृत्तिकस्य शाब्दबोधादर्शनात् 'न हि गुड इत्युक्ते मधुरत्वं प्रकारतया गम्यते' इति समर्थसूत्रभाष्याच्च तद्धर्मवच्छिन्नविषयकशाब्दत्वावच्छिन्नं प्रतितद्धर्मावच्छिन्ननिरुपितवृत्ति- विशिष्टज्ञानं हेतुः। सा च वृत्तिस्त्रिधा। शक्तिर्लक्षणा व्यञ्जना च।

**न्यायदर्शने गौतममहर्षिणा शब्दविषये प्रोक्तम्-'आप्तोपदेशः शब्दः।'[४]**

आप्तः खलु साक्षात्कृतधर्मा यथा-दृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा। साक्षात्करणमर्थस्याप्तिः, तया प्रवर्तत इत्याप्तः। ऋष्यार्यम्लेच्छानां समानं लक्षणम्। तथा च सर्वेषां व्यवहाराः प्रवर्तन्त इति। एवमेभिः प्रमाणैर्देवमनुष्यतिरश्चां व्यवहाराः प्रकल्पन्ते नाऽतोऽन्यथेति। स द्विविधो दृष्टादृष्टार्थत्वात्। यस्येह दृश्यतेऽर्थः स दृष्टार्थः। यस्याऽमुत्र प्रतीयते सोऽदृष्टार्थः। एवमृषिलौकिकवाक्यानां विभाग इति।

न्यायसिद्धान्तमुक्तावल्यां शब्दं निरूपयति श्रीविश्वनाथपञ्चाननभट्टाचार्यः-

---

१. भावः ........ तदर्थत्वात्। निरुक्तभाष्यटीका प्रथमोऽध्यायः प्रथमखण्डः
२. तत्र ...... द्रव्यशब्दः। व्यक्तिविवेकः प्रथमो विमर्शः
३. लघुमञ्जूषा पृ. ९
४. न्यायदर्शनम् सूत्र ७

**इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः।**
**शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः।**
**कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः।**
**सर्वः शब्दो नभो वृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते।**
**वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता।**
**कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते।।**[1]

नभोवृत्तिः आकाशसमवेतः। दूरस्थशब्दस्याऽग्रहणादाह। श्रोत्रेति।

श्रीमच्छबरस्वामिप्रणीते शाबरभाष्ये शब्दविषये प्रोक्तम्-'अथ गौरित्यत्र कः शब्दः? गकारौकारविसर्जनीया इति भगवानुपवर्षः। श्रोत्रग्रहणे ह्यर्थे लोके शब्दशक्ति प्रसिद्धः।[2] एवं बहुव्याकरणाचार्यैः साहित्याचार्यैः दर्शनाचार्यैश्च शब्दतत्त्वविवेचनं प्रतिपादितम्।

भोजराजेन शब्दस्य द्वादशभेदाः कृताः। तेषु पदपर्यन्तं वाक्यपदीयानुसारं कल्पिताः भेदास्सन्ति। यथोक्तं भर्तृहरिणा-

**पदे न वर्णाः विद्यन्ते वर्णेष्ववयवा न च।**
**वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन।।**[3]

शब्दस्य अन्तिमं भेदत्रयं वाक्यम्, प्रकरणम्, प्रबन्धञ्च शृङ्गारप्रकाशस्य तृतीये प्रकाशे भोजराजेन एवं वर्णितम्-'एकार्थपरः पदसमूहो वाक्यम्'।[4] तत्त्रिधा-संस्कृतं प्राकृतमपभ्रंशश्च। तत्र संस्कृतं श्रौतमार्षं लौकिकञ्च। तेषु श्रौतं द्विधा-मन्त्रब्राह्मणभेदात्। तत्र मन्त्रो यथा-तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः। तदेव शुक्रममृतं तद्ब्रह्म तदापस्स प्रजापतिः।। ब्राह्मणं यथा-शंयो मनुष्याणां रागद्वेस्समूढो भवति। तत्रान्येषामधिपतिः सर्वेषां मनुष्यकैः कामैस्संपन्नमतः। स मनुष्याणां परम आनन्दः।

आर्षं द्विधा। स्मृतिः पुराणञ्च। तयोस्मृतिर्यथा-

**शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते।**
**ते च स्वा चैव राज्ञस्तु ताश्च स्वा चाग्रजन्मनः।।**

पुराणं यथा-

**हिरण्यकशिपुर्दैत्यो यां यां दिशमुदैक्षत।**
**भयभ्रान्तैस्सुरैश्चक्रे तस्यै तस्यै दिशे नमः।।**

---

१. इमौ ............ मते। न्यायसिद्धान्तमुक्तावली श्लो. १६४, १६५, १६६

२. शाबरभाष्यम् प्रथमपादः

३. वाक्यपदीयम्, प्रथमकाण्डम् कारिका ७३

४. शृङ्गारप्रकाशे तृतीयप्रकाशः पृ. ९०-९१

लौकिकं द्विविधं, काव्यं शास्त्रञ्च। तयोः काव्यं यथा-

**कस्य नो कुरुते मुग्धे पिपासाकुलितं मनः।**
**अयं ते विद्रुमच्छायो मरुमार्गं इवाधरः।।**

शास्त्रं यथा-

**प्रकामधवलं यस्याश्चक्षुः पर्यन्तपक्ष्मलम्।**
**नवनीतोपमं तस्या भवति स्मरमन्दिरम्।।**

तदेतत् समस्तमपि वाक्यजातमाख्यातोपाधेरेकादशप्रकारं विप्रथते। तद्यथा-एकाख्यातमनेकाख्यातमावृत्ताख्यातमनुवृत्ताख्यातं विपरिणताख्यातमेकार्थाख्यातं समुच्चिताख्यातं कृदभिहिताख्यातमपेक्षिताख्यातमेकान्तराख्यातं निरन्तराख्यातमिति।

प्रबन्धाङ्गमवान्तरवाक्यं प्रकरणम्।[1] तत्त्रिधा-एकवाक्यमनेक वाक्यमेकानेकवाक्यञ्च। तत्रैकवाक्यं द्विधा-सानुबन्धं निरनुबन्धञ्च। तयोस्सानुबन्धं यथा-

**स मारुतिसमानीतमहौषधिहृतव्यथः।**
**लङ्कास्त्रीणां पुनश्चक्रे विलापाचार्यकं शरैः।।**[2]

निरनुबन्धं यथा-

**ते हिमालयमामन्त्र्य पुनः प्राप्य च शूलिनम्।**
**सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः।।**[3]

अनेकवाक्यं द्विधा-आद्युपसंहृतमन्तोपसंहृतञ्च। तयोराद्युपसंहृतं यथा-

**तस्मिन्क्षणे पौरविलासिनीनामीशानसंदर्शनलालसानाम्।**
**प्रासादमालासु बभूवुरित्थं त्यत्तान्यकार्याणि विचेष्टितानि।। इत्यत आरभ्य,**

**तस्मिन् मुहर्त्ते पुरसुन्दरीणामीशानसंदर्शनलालसानाम्।**
**प्रासादमालासु बभूवुरित्थं त्यक्तान्यकार्याणि विचेष्टितानि।।**

**तासां मुखैरासवगन्धगर्भै र्व्याप्तान्तराः सान्द्रकुतूहलानाम्।**
**विलोलनेत्रभ्रमरैर्गवाक्षाः स्सहस्त्रपत्राभरणा इवासन्।।**[4]

---

१. शृङ्गारप्रकाशे तृतीयप्रकाशः पृ. १०७-१०९
२. रघुवंशम्, १२/७८
३. कुमारसंभवम् ६/९४
४. कुमारसंभवम्, ७/६२

अन्तोपसंहृतं यथा-

**स्थाने तपो दुश्चरमेतदर्थमपर्णया पेलवयाभितप्तम्।**
**या दास्यमप्यस्य लभेत नारी सा स्यात्कृतार्था किमुताङ्कशय्याम्॥**[१] इत्यारभ्य,
**इत्यौषधिप्रस्थविलासिनीनां श्रृण्वन् कथाः श्रोवसुखास्त्रिनेत्रः।**
**केयूरचूर्णीकृतलाजमुष्टिर्हिमालयस्यालयमाससाद** ॥[२] इति यावत्॥

एकानेकवाक्यं द्विधा-सर्वनामयोजितं विभक्तियोजितं च। तयोस्सर्वनामयोजितं यथा-

**अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः।**[३] इत्यारभ्य,
**यज्ञाङ्गयोनित्वमवेक्ष्य यस्य सारं धरित्रीधरणक्षमं च।**
**प्रजापतिः कल्पितयज्ञभागश्शैलाधिपत्यं स्वयमन्वतिष्ठत्।**[४] इति यावत्।

विभक्तियोजितं यथा-

**निर्वाणभूयिष्ठमथाऽस्य वीर्यं सन्धुक्षयन्तीव वपुर्गुणेन।**
**अनुप्रयाता वनदेवताभ्यामदृश्यत स्थावरराजकन्या।**[५] इत्यत आरभ्य
**सुगन्धिनिश्वासविवृद्धतृष्णं बिम्बाधरा सन्न च द्विरेफम्।**
**प्रतिक्षणं संभ्रमलोलदृष्टिं लीलारविन्देन निवारयन्ती।**[६] इति यावत्।

प्रकरणेष्वपि प्रकरणानि यथा-इन्दुमतीस्वयंवरे मगधेश्वरादिराजवर्णनादीनि। प्रबन्धेष्वपि प्रबन्धा यथा-उत्तरचरितादौ गर्भनाटकादीनि।

विधिनिषेधावगतिहेतुर्महावाक्यं प्रबन्धः।[७] तत्त्रिधा-पद्यं गद्यं च मिश्रं च। तेषु छन्दोगतं पद्यं, छन्दस्तु त्रिधा अक्षरच्छन्दोमात्राच्छन्दोगणच्छन्दश्चेति। तदेतन्त्रिविधमपि महाकाव्येतिहासश्रुत्यादिषु च दृश्यते। अच्छन्दः पदसंतानो गद्यम्। तत्त्रिधावृत्तगन्धि चूर्णमुत्कलिकाप्रायं च। तदेतत्त्रिविधमपि आख्यायिकासु कथासु मधुमल्लिकादिषु दृश्यते। गद्यपद्यव्यायोगो मिश्रम्। तत्त्रिधा-पद्यप्रधानं, गद्यप्रधानं, तुल्यरूपं चेति। पद्यप्रधानं त्रिधा, सजातीयेन विजातीयेनोभाभ्यां च। तत्र सजातीयेनेतिहाससुभाषितकोशादौ, विजातीयेन प्रस्थानसेतुबन्धनविवरणादौ, उभाभ्यां भारतीयदशरूपकलक्षणादावस्य प्रयोगो दृश्यते।

इत्थं शब्दस्य अन्त्यभेदत्रयं काव्यमनुसृत्य प्रकल्पिताः सन्ति भोजराजेन। अन्ये भेदाः व्याकरणक्रियानिर्वाहाय यथा वाक्यपदीये कल्पिताः तथैवात्र शृङ्गारप्रकाशेऽपि व्याख्यातास्सन्ति।

---

१. कुमारसंभवम्, ७/६५
२. कुमारसंभवम्, ७/६९
३. कुमारसंभवम्, १/१
४. कुमारसंभवम्, १/१७
५. कुमारसंभवम्, ३/५२
६. कुमारसंभवम्, ३/५६
७. शृङ्गारप्रकाशे तृतीयप्रकाशः पृ. ११०-११२

# स्मृतीनां प्रामाण्यं तस्यौचित्यञ्च

**डॉ. यशवीरसिंहः**

स्मृतयो भारतीयाया अस्मितायाः द्वाराणि सन्तीति निश्प्रचम्। इमाः सर्वाः मानवजातेः लौकिकस्यामुष्मिकस्य च चिन्तनस्य आधारशिला इत्यपि सत्यमेव। यतोहि सर्वाः स्मृतयः श्रुतिमूलास्तिष्ठन्तीति। श्रुतयस्तु अपौरुषेया विश्वस्मिन् धर्मं विना धर्मिणः कल्पनमशक्यम्। तस्य च धर्मास्योपदेशः वेदेभ्यः स्मृतिभ्यश्चैवावाप्यते। धर्मस्य निर्धारणे त एव प्रमाणभूताः अथ इदमप्यवधेयं भवति यत्–

प्रमेयसिद्धिः प्रमाणाद्धि।।[१] प्रमेयानां सिद्धिः प्रमाणाद्धि भवति। अस्मादेव कारणात् धर्मं प्रत्यास्थावन्तः जनाः वेदानां श्रुतीनां च प्रमाणत्वमभ्युपगच्छन्ति।

**धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः।**

विदुषां मतेन तु शिष्यते हितमुपदिश्यतेऽनेनेति शास्त्रम् इतीयं व्युत्पत्तिः। एतत्सहैव इदमपि सत्यं यत् मुख्यं शास्त्रं श्रुतिरेव यतोहि तत्र पूर्णतः निष्कलुषो अपौरुषेयश्च शब्दराशिः प्राप्यते। धर्मस्य निर्धारणे मनुस्मृतिकारेणादि मनुना स्वीकृतं यत् वेदस्मृतीभ्यो प्रतिपादितस्य सज्जनानामाचरणस्य तेषामात्मतुष्टिश्च धर्मेणैव भवति–

**वेदोऽखिलो धर्ममूलं स्मृतिशीलं च तद्विदाम्।**
**आचारश्चैव साधूनामात्मनस्तुष्टिरेव च।।**[२]

मनुः स्मृतीनां कृते धर्मशास्त्रमिति पदं व्यवहरति–

**श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः।**[३]

अर्थात् श्रुतयः वेदाः स्मृतयश्च धर्मशास्त्राणि। सनातने धर्मे साकल्येन चतुर्दशविद्यास्थानानि स्वीकृतानि सन्ति यत्र धर्मशास्त्रस्यापि परिगणनमस्ति–

---

१. संख्यकारिका ३
२. म. स्मृ. २/६
३. म. स्मृ. २/१०

**पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।**
**वेदास्थानानि विद्यानां धर्मस्य चतुर्दश।।**[१]

पुराणानि, न्यायः, मीमांसा, धर्मशास्त्राणि षडङ्गो वेदः इत्येतानि चतुर्दशविद्यापीठानि। इदमवधेयं यदेतेषां प्रामाणिकतायै मूलतः श्रुत्यनुकूलतैव आधारभूता तिष्ठति। वेदातिरिक्तं अन्यानि सर्वाण्यपि शास्त्राणि स्मृति कोट्यामेव स्थानं धारयन्ति। याज्ञवल्क्यो महर्षिः ब्रवीति–

**श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।**
**सम्यक् संकल्पजः कामो धर्ममूलमिदं स्मृतम्।।**[२]

श्रुतिः स्मृतिः सदाचारः स्वात्मप्रियता सम्यक्संकल्पः इत्येतेषु उद्भूतस्य धर्मस्य विषये समेषां मध्ये विरोधसमये सति उत्तराणां कृते तत्तत् शास्त्राणां पूर्ववर्ति शास्त्रस्यप्रामाण्यं स्वीकृतम्भवति। अनेन प्रकारेण श्रुतीनां प्रामाण्यं नैरपेक्ष्यं प्रामाण्यमन्येषाञ्च सापेक्षं प्रामाण्यम्भवति।

शास्त्रकाराणां कथनमस्ति यदात्मप्रियताया विषये धर्मस्य प्रामाण्यन्तु विद्यते किन्तु सा प्रियता सदाचारानुकूला स्यादिति निश्चयः। भारतीयचिन्तने सदाचारशिष्टाचारशब्दौ समानार्थकौ शब्दौ स्त। शिष्टस्तदेव भवति यः खलु अनादेः वैदिकपरम्परायाः समर्थक आचारवाँश्च वर्तते। एतावता आत्मनः प्रियता तद्विपरीतामाभूदिति निश्चीयते। सदाचारश्च स्मृतिप्रतिकूलो मा भवतु स्मृतिश्च श्रुतिप्रतिकूला न स्याद्। महर्षि जैमिनिरवदत्–

**विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम्।**[३]

अर्थात् श्रुतिस्मृत्योविरोधे सति श्रुतिरनपेक्षा भवति किन्तु यदि स्मृतिः श्रुतिप्रतिकूला न भवेदथ च मूलभूतं श्रुतिवचनमपि तत्राप्राप्तं स्यात्तदा स्मृत्यनुसारमेव श्रुतीनामनुमानं कल्पयित्वा कार्यं विधेयम्भवति यतोहि स्मृतीनां श्रुतिमूलत्वात्। यथा–

**इयं स्मृतिः श्रुतिमूलिका स्मृतित्वात्।।**[४]

नियमोऽयं सदाचारविषये, आत्मनः प्रियतायाश्च विषये भवतीति। उपर्युक्तसूत्रस्य व्याख्यानं जैमिनिमीमांसायां तथ्यस्यास्य पुष्टिः महता संरम्भेण कृतास्ति। अस्मिन् प्रसंगेऽपरं सूत्रमुद्धरामः–

**श्रुतिलिंगवाक्यप्रकरणसमाख्यानां समवाये पारदौर्बल्यमथविप्रकर्षात्।**[५]

---

१. याज्ञवल्क्यस्मृति १/३
२. या. स्मृ. १/७
३. जै. सू. १/३/३
४. जै. सू. १/३/४
५. जै. सू. ३/३/१४

अर्थात् श्रुति-लिंग-वाक्य-प्रकरण-स्थान-समाख्यानां प्रमाणमीमांसाक्षणे एकत्रीभूते सति पूर्वप्रमाणं प्राबल्यं भजत उत्तरञ्च निर्बलत्वम्। तात्पर्यार्थः श्रुतेरपेक्षया लिङ्गस्य, लिङ्गस्यापेक्षया वाक्यस्य, वाक्यस्थानपेक्षया प्रकरणस्य, प्रकरणस्यापेक्षया स्थानस्य स्थानस्य चापेक्षया समाख्यायाः दौर्बलत्वं सिद्धयति। तथ्यमिदं स्पष्टीकर्तुं भाष्ये कथितमस्ति यत् लिङ्गादि पञ्चप्रमाणानि श्रुतिवन्न सन्ति साक्षात् विनियोजकानि। किन्तु श्रुतिकल्पनात् लिंगस्य, लिङ्गश्रुतयोरपेक्षया वाक्यस्य, वाक्य-लिंग-श्रुतिनामपेक्षया प्रकरणस्य, वाक्यलिंगश्रुतिप्रकरणानामपेक्षया स्थानस्य, वाक्यलिंगश्रुतिप्रकरणस्थानामपेक्षया समाख्यायाः प्रमाणत्वं विनियोजकत्वं धारयति। अनेन प्रकारेण यस्यापेक्षया विनियोजकत्वे विलम्बो भवति स पूर्ववर्ति प्रामाण्यात् दुर्बलत्वं धारयतीति सिद्धम्।

केषाञ्चित् तथाकथिताधुनिकविदुषां मतेन कथनीयं भवति यत् शास्त्राणि साम्प्रतं बहुप्राचीनानि सञ्जातानि, यतो हि यं देशं कालं चाश्रित्य तेषां विरचनं कृतमासीत् तस्य स्थानस्य कालस्य परिस्थितयः सम्प्रति पर्याप्तत्वेन वैभिन्यं धारयन्ति। अतः साम्प्रतिकेषु सन्दर्भेषु तेषां प्रामाण्याङ्गीकारेण महदासौविध्यं सञ्जायते। अतः समेषां शास्त्राणां विरचनं नूतनदृष्ट्याविष्करणीयं भवतीति समीचीनं स्यात्। एतेन प्रयत्नेन शास्त्राणां सहमतिराधुकिसन्दर्भेण सह स्थातुं शक्यते। किन्तु कथनमिदं सर्वथाऽसम्बद्धमसमीचीनं च। शास्त्रेषु प्रायशः सर्वेषां मनुष्याणां कृते मार्गनिर्देशः प्राप्यन्ते। तदनुसारं प्रत्येकमधिकारी प्रत्येकं साधनानुसारं स्वं स्वं कार्यं कर्तुं समर्थोऽस्ति। अत एव सर्वैः मुनिभिः ऋषिभिश्च महाराजो मनुः प्रार्थितमासीत्–

**भगवन् सर्ववर्णानां यथावदनुपूर्वशः।**
**अन्तरप्रमाणानां च धर्मा नो वक्तुमर्हसि।।**[१]

हे भगवन्! ब्राह्मणादि चतुर्वर्णानां तथा च एतदतिरिक्तानामपि जनानां सम्पूर्णजीवसमूहस्य च कृते कर्तव्याकर्तव्यविषये अनुपूर्वशः यथावत् सदाचाराणां वर्णने भवान् समर्थः।

धर्मशास्त्रे सीमाबद्धानां वार्ताणां चयनं नैव भवति अपितु अत्र समाजस्य, भूगोलस्य, पर्यावरणस्य, धर्मस्य, नीतेः, कर्मकाण्डस्य व्यवस्थायाः, राष्ट्रियतायाः, अपराधानां, दण्डस्य, अर्थस्य, कामस्य, लोकपरलोकयोः तथा चान्येषां विषयाणां सैद्धान्तिकं व्यावहारिकं च विवेचनं विस्तृतरूपेण द्रष्टुं युज्यते। वस्तुत्वेन यदि सर्वे मानवाः श्रुत्यनुसारं यथाक्रमं परस्परं व्यवहरेयुश्चेत्तदा कस्यापि जनस्य कृते निराशादीनां प्रादुर्भाव एव न स्यादिति। भूलोके सर्वत्र सर्वदा च शान्तिः स्यात्। नास्तिकष्टकल्पनं यदस्माकं ऋषिभिः सिद्धान्तस्यास्य आधारेणैव सर्वेषां जनानां सुखस्य शान्तेः, स्वस्थजीवनस्य, मंगलाचरणस्य च शुभकामना कृताऽऽसीत्। मन्मतेन तु मानवजीवनस्य प्रायशः सर्वेषु पक्षेषु स्मृतिकाराणां

---

१. मनु. १/२

लेखनीप्रमोदः पवकीर्णोऽस्ति। तत्र राजा-प्रजा, माता-पिता, पुत्र-पुत्री, स्त्री-पुरुष, जड़-चेतन, कर्म-अकर्म, खाद्याखाद्य, पाप-पुण्य, जीवन-मरणगुणदोषाणामथ च समाजस्य प्रत्येकमङ्गे विद्यमानानां लोकानां स्वाभावानुसारं तेषां कल्याणाय स्मृतिः धर्मनियमा विरचिताः। एते नियमाः प्रायशः सार्वजनीनाः, सार्वकालिकाः, सार्वजनावगम्याश्च सन्ति। अतएव नव्यप्रकारेण शास्त्राणां रचनाया आवश्यकतैव नास्ति।

अपरं कारणमिदमस्ति यत् इदं स्मार्तपरम्परा तस्मादाप्तपुरुषात् मनुनामकादुद्भूतास्ति यस्य कृते भारतस्यार्षपरम्परया सडिण्डमं घोषः कृत आसीत् यद् हे भगवन्! भवानेव अस्यापौरुषेयस्य अचिन्त्यस्य अप्रमेयस्य च वेदस्य अग्निष्टोमादीनां यज्ञानां च ब्रह्मविद्यायाश्चैक एकज्ञातास्ति-

**त्वमेको ह्यस्य सर्वस्य विधानस्य स्वयंभुवः।**
**अचिन्त्यस्याप्रमेयस्य कार्यतत्त्वार्थवित्प्रभो।।**[१]

अस्यां परिस्थितौ सैव स्मृतिः प्रामाण्यं धर्तुं शक्नोति या खलु श्रुत्यनुकूला याज्ञवल्क्यादि ऋषिसदृशैः आप्तपुरुषैश्चानुमोदिता भवेत्। यतो हि धर्मशास्त्रोपदेश आचार्यैरेव प्रसृतो भवेदितिनियमः। आचार्यशब्दस्य व्याख्याने कथिमस्ति-

**आचिनोति च शास्त्रार्थान् आचारे स्थापयत्यपि।**
**स्वयमाचरते यस्मात् तस्मादाचार्य इष्यते।।**

अर्थात् शास्त्रसिद्धान्तानां स्थापनं तेषां प्रचारः प्रसारश्च स्वजीवने तेषां नित्यानुष्ठानं चेत्तर्हि आचार्यत्वं प्रतिष्ठितम्भवति। अत इदं कथयितुं युज्यते यन्नूतनानां शास्त्राणां प्रणयनस्य नास्त्यावश्यकता यतोहि एतादृशे परिश्रमे कृते सत्यपि सर्वप्रथमं प्राचीनताया अर्वाचीनतायाश्च सीमानिर्धारणमावश्यकम्भविष्यति यदस्त्यतीवदुष्करं कार्यम्। वस्तुतः प्रत्येकं शास्त्रस्य पूर्वकालिकशास्त्रादर्वाचीनं भवत्येव परकालिकशास्त्राच्च प्राचीनं भवत्येव। तदा साम्प्रतकाले प्रणीतमपि शास्त्रं किञ्चित्कालानन्तरं प्राचीनं स्यात्तदा पुनः नूतन शास्त्राणामविष्कारः स्यात्। एवं कृते अनवस्था दोषो उत्पद्यते। प्रत्येकं पुरुषेण च प्रणीतं शास्त्रं शास्त्रं न भवितुमर्हतीत्यपि सत्यमेव। यद्येवं स्वीक्रियते तर्हि आनन्त्यदोषोद्भावनं स्यादेव।

एतदतिरिक्तं धर्मस्य ब्रह्मणः ऐन्द्रिकं प्रत्यक्षमशक्यम्। ब्रह्मनाम औपनिषद् पुरुषस्य अस्य वाक्यस्य तात्पर्यमस्ति यत् उपक्रमोपसंहारादि षड्विधेन लिंगपरामर्शेन विचार्यमाणैरुपनिषद्भिरेव ब्रह्मावबोधो जायते नान्यैरुपायैः। साधनचतुष्टयेन संपन्नैरधिकारिभि उपक्रमोपसंहारादि षड्विधलिंगैर्विचार्य-माणैरुपनिषद्भिः ब्रह्मसाक्षात्कारो भवतीति निश्चप्रचम्। न जायत इति न। एतत्प्रचारेणैव मीमांसकरीत्या शास्त्रसमन्वयेनैव धर्मज्ञानम्भवतीति निष्पन्नस्य न तु प्रत्यक्षादि प्रमाणैः। अर्थकामयोरनासक्तेनाधि-

१. मनु. २/३

कारिणा आचार्यौपदिष्टशास्त्रैरेव धर्मतत्त्वावबोधो जायते नान्यथा। श्रुतिस्तु परमं शास्त्रं तदनुकूलास्मृतयोऽपि शास्त्राणि। अत: तद्विहितमार्गेण तदनुसरणेन च प्राणिनां कल्याणं भवतीति। शास्त्राणि पुन: कमपि लक्ष्मीकृत्यैवोपदिशन्ति। ते मानवेभ्य: मानवरूपेण सहैष ब्राह्मण-संन्यासी-नर-नारीतयादिरूपेष्वपि व्यवह्रियमाणेभ्य: जनेभ्य उपदेशं प्रयच्छन्ति।

साम्प्रति बुद्धिजीविन: कथयन्ति यत् वयं तु मानवधर्मोपासका: स्म। नास्माकं धर्मेण सम्प्रदायेन सह कोऽपि सम्बन्ध:? परन्त्वयं प्रश्नोऽस्ति प्रष्टव्य: यत्किं मानवताया: पूजनात् परं किं वा तस्या: रक्षणात्परोऽपि कोऽपि धर्मोऽस्ति सनातनधर्मात् पृथक्? अथवा इदमपि कथयितुं शक्यते यत् सनातनधर्मस्य यत्किञ्चिदपि धर्मतत्त्वमस्ति तद्विहाय मानवधर्मस्यातिरिक्तं किमपि चिन्तन-मस्त्यवशिष्टम्? वस्तुत: भारतीयसंस्कृते: विचारसरणिमतिरिच्य मानवतावादस्य विषये चिन्तनमेव कर्तुं न शक्यते। सर्वे आधुनिका: मानवतावादस्य समर्थका: स्यु: परं ते शास्त्राणामध्ययनं श्रवणञ्चापि अवश्यं कुर्यु: येन भ्रमाणां समूलोन्मूलनं स्यात्। पशुभ्य: मानवा: केवलमस्मिन्नेव विषये विशिष्टास्सन्ति यत् पशु: सर्वमनुभवति किन्तु तेषामाचरणं शास्त्रसम्मतं नैव भवति धर्मादीनां व्यवस्थां तेन जानन्ति अथ च मानव: एतत्सर्वं विचार्यैव धर्मसु प्रवृत्तौ जायते। य: खलु नैतदाचरति रूपेण–

**आहारनिद्राभयमैथुनञ्च सामान्यमेतत् पशुभिर्नराणाम्।**
**धर्मो हि तेषामधिको विशेषो धर्मेणहीना: पशुभि: समान:।।**[१]

साम्प्रतं नैके पाश्चात्यविचारसरणिरन्धानुकरणशीला: तथाकथिता विचारका: कथयन्ति यन्मनुष्यो नाम सामाजिकप्राणी। प्राणी ना पशुत्वबद्धस्यैव न तु विचारशीलस्य भगवच्चरणानुरागिणो मनुष्यस्य। वयं भारतीया: देवसंस्कृतेरुपासका:। विश्वस्य प्राचीनतमा आर्षवाणी संहितारूपेणास्माकं पार्श्वे सुरक्षितास्ते। अस्माकं धमनिषु मनो: याज्ञवल्क्यस्य, पाराशरस्य, उपमन्यो:, व्यासस्य, वशिष्ठादीञ्चर्षीणां रक्तं संस्कारश्च प्रवहन्ति। यत्र गंगा, यमुना, सरस्वत्यादीनां जलैरभिप्लुता जनता सर्वदा सर्वथा च सनातनशाश्वतधर्ममूल्याणां कृते जाग्रता तिष्ठन्ति तेषां कृते सामाजिकप्राणी (Social Animal) इत्येतच्छब्द: महदनादरस्य द्योतक:। अयं खलु कुचक्र: पाश्चात्यानाम्।

वस्तुत: धर्मो नाम कर्तव्यस्य धर्मशब्दार्थोऽपिव्यापक:। जीवनस्य प्रत्येकं चेष्टा धर्मो भवितुं शक्नोति अधर्मोऽपि केवलं शास्त्रानुकूलत्वं तद्विपरीतत्वं वा तत्रकारणम्भवति अत: मानवजातेरभ्युदयार्थं धर्म: सदैव धारणीय:। धर्म एव जीवस्य पारमार्थिक: सख्या 'धर्मस्तिष्ठति केवलम्' इत्युक्तिरपि भवति प्रमाणम्। महाभारते कथितं भगवता वेदव्यासेन–

**धनानि भूमौ पशवश्च गोष्ठे नारीगृहद्वारजनाश्मशाने।**
**देहश्चितायां परलोकमार्गे धर्मानुगो गच्छति जीव एक:।।**

१. हितोपदेश:

वस्तुतः यदुपनिषदा भणितम्–

**धर्मस्य तत्त्वं निहितं गुणायाम्'**

तत्सत्यमेव। धर्मानुसन्धानाय मानवेन प्रवर्तितव्यम्। धर्मशास्त्राणामनुशीलनं विना हिरणायस्य पात्रस्य मुखं च वापि अधिहितं भवति–

**हिरणमयेन पात्रेण सत्यस्यापिहितं मुखम्।**
**तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये।।[१]**

स धर्मः सदैवाचरणीयः ज्ञेयः मन्तव्यः निदिध्यासितव्यः विजिज्ञासितव्यश्च। भगवान् वेदव्यासो भणति महाभारते–

**मातृपितृसहस्त्राणि पुत्रदारशतानि च**
**संसारेष्वनुभूतानि यानि यास्यन्ति चापरे**
**हर्षस्थान सहस्त्राणि भयस्थान शतानि च**
**दिवसे दिवसे मूढभावशान्ते न पण्डितम्**
**ऊर्ध्वबाहुर्विरौभ्येव न हि कश्चिच्छ्रणोति माम्**
**धर्मादर्थश्चकामश्च स किमर्थं न सेव्यते।**
**न ज्ञातुकामान्नभयान्न लोभात्**
**धर्मं त्यजेत् जीवितस्यापि हेतोः।**
**जीवो नित्यः सुखदुःखे त्वनित्ये**
**धर्मो नित्यः हेतुरस्य त्वनित्यः।।[२]**

अतः सर्वैः सर्वदा धर्म एव रक्षणीयः पालनीयः सेवनीयश्च यतोहि कथितमभियुक्तैः–

**धर्मो रक्षति रक्षितः।**

---

१. ईशावास्योपनिषद् ८
२. भारत सावित्री

# भाषावतरण की वैदिकसमालोचना

डॉ. ओउम् प्रकाश पाण्डेय

"वाङ् मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितम्,
ऋतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु"

***"एकं वा इदं वि बभूव सर्वम्"*** के द्वारा[1] सृष्टि के विलक्षण वैविध्य को एक ही तत्त्व विशेष का वैभव घोषित करते हैं। आखिर वह तत्त्व विशेष कौन सा है, जो सृष्टि के विविधात्मक विलक्षणता का कारक हो सकता है तथा उसका आधार क्या है? इन प्रश्नों के उत्तर हेतु उपर्युक्त ऋचा में उद्बोधित ***"वि बभूव"*** अर्थात् वैविध्य की विलक्षणता के निहितार्थ को गहनता से समझना होगा। विलक्षणता यानि **वि** उपसर्ग से समन्वित लक्षणता का आशय विशिष्ट नैसर्गिक गुणों से होता है और गुण अथवा विशिष्टताएँ अमूर्त ज्ञान के ही क्रियात्मक आभास होते हैं, जो प्रकारान्तर से जागतिक स्वरूपों का आधार बनते हैं। इस प्रकार विशिष्टताओं से ओत-प्रोत सृष्टि के इस विविधात्मक स्वरूप का कारक ज्ञान ही सिद्ध होता है।[2] तो स्पष्ट रूप से ***"सत्यं ज्ञानम् अनन्तं ब्रह्म"*** के माध्यम से ज्ञान की एकमेव सत्ता की ही पुष्टि करता है। वस्तुतः ज्ञान ही वह प्रेरक तत्त्व है, जिसके द्वारा अप्रमेय अखंड अपने को खंडात्मक स्वरूपों में अभिव्यक्त करता है। प्रकट रूप से भी यदि देखा जाय तो नाभकीय अम्लों व प्रोटीन मॉलीक्यूलों के अलभ्य संयोजनों से अस्तित्व में आए जैविक द्रव्यों में अवस्था परिवर्तन के साथ-साथ उत्तरोत्तर विकास की सभी सम्भावनाओं को समेटे रहने वाला अनुवांशिक कूट या फिर जड़ समझे जाने वाले परम कणों की प्रच्छन्न गणितीय संधियों से विकसित विशालतम पिण्डों की अनन्त शृंखलाओं वाले वक्र ब्रह्माण्ड की गुब्बारे सदृश्या अपसरणता और एक निश्चित अंतराल के पश्चात् इसके सभी उपादानों का विशकलित होकर पुनः अपने मूल स्वरूप को प्राप्त होना ही नहीं अपितु इन्हीं प्रक्रियाओं को क्रमबद्ध तरीके से अनवरत दुहराते रहना, यह सभी कुछ एक परम नियोजित बौद्धिक आचरण का एक विस्मयजनित साक्ष्य सदृश्या ही उभरता है। किञ्चित् यही कारण है कि आधुनिक विज्ञान भी **न्यूटन के यान्त्रिक विश्व** के स्थूल पायदानों से उपर उठते हुए **क्वाण्टम भौतिकी** के उन्नत स्तरों

---

१. ऋग्वेद (६/४/२९)

२. तैत्तिरीय उपनिषद् (२/१)

पर पहुँच कर अब इसे **बौद्धिक** ही घोषित करने लगा है। **"द मिस्ट्रीयस यूनिवर्स"** नामक अपनी अद्वितीय कृति में प्रसिद्ध भौतिकविद् **सर जेम्स जींस** ने यह उद्‌घाटित किया है कि विज्ञान के क्षेत्र में अब एक विस्तृत सहमति स्थापित हो गयी है कि यह विश्व एक बड़े यन्त्र के प्रकट स्वरूप के मूल में दिव्य विचारों के फैलाव की ही भांति प्रतिभासित है।

सृष्टिगत बौद्धिकता का आशय प्रकृति में विद्यमान उस आन्तरिक चेतना से है, जो परिस्थिति अनुरूप अपने आप को स्वतः ही व्यवस्थित करती रहती है। चेतना का यह वैशिष्ट्य अमूर्तज्ञान के ***"स्वगुणैर्निगूढम्"*** संकल्प का ही प्रतिफलन है जो अपने मात्रात्मक आधार पर प्रस्फुरित प्राणिक ऊर्जा की क्रियात्मक गतिधर्मिताओं के प्रकारान्तर दृश्यादृश्य जगत् के द्रव्यात्मक विविधाओं में प्रतिभासित होने लगती हैं।[१] ऐतरेय उपनिषद् में ***"स ईक्षत् - स प्राणमसृजत - स इमॉल्लोकान् सृजत्"*** के माध्यम से सृष्टि प्रक्रिया संबंधित इन्हीं तथ्यों का उल्लेख हुआ है। वस्तुतः जड़ समझी जाने वाली सृष्टि ज्ञानजन्य सचेतन ईक्षण का ही परिणाम है, अतएव अपने सभी विविधात्मक स्वरूपों में वह उसी अनंत प्रज्ञा को ही प्रतिभासित करती है। प्रसिद्ध भौतिकविद् **आर्थर एडिंग्टन** भी अपनी चर्चित पुस्तक **"द नेचर ऑफ फिजीकल वर्ल्ड"** में विश्व के सारभूत उपादानों को मानसिक करार देते हुए एक प्रकार से इन्हीं तथ्यों की ही पुष्टि करते प्रतीत होते हैं। इस तरह अद्वैत **"ज्ञान"** की अभेद्यात्मक सत्ता ही चेतना की प्राणिक बोधगम्यता के स्तर पर **"ज्ञाता"** तथा इसकी पदार्थगत गतिधर्मिताओं के परिणामस्वरूप अस्तित्व में आए वैश्विक प्रपञ्चों के विविधात्मक स्तरों पर **"ज्ञेय"** के भेदात्मक द्वैत के माध्यम से मूलतः अपने आपको ही अभिव्यक्त करती है। ज्ञेय, ज्ञाता व ज्ञान का यह त्रित्व ही अपने विपरीत क्रम में ब्रह्म के **सत्, चित्** व **आनंद** या फिर **वाक्, प्राण** व **मन** स्वरूपी आत्मा के त्रयात्मकता (***स वा एष आत्मा वाङ्मयः प्राणमयो मनोमयः***[२] (बृहद् आरण्यक उपनिषद्) का द्योतक है और यही क्रम ही वेद के **ऋक्, यजुष्** व **साम** नामक त्रयी विद्या (**आधिभौतिक** -वाक्/पिण्ड/घन, **आधिदैविक**-प्राण/गति/तरल व **आध्यात्मिक**-मन/ओज/विरल) का भी आधार है। भौतिक विज्ञान के परिप्रेक्ष्य में इन्हें प्रकृति के तीन मूल बलो यानि **गुरुत्वाकर्षण** (नाभिक/पिण्ड केन्द्रित), **विद्युत-चुम्बकीय** (तेजोमण्डल/परिधि विस्तार) तथा **प्रबल नाभिकीय** (दोनों के मध्य उभयात्मक गति संतुलन) के रूप में परिभाषित किया जा सकता है।

वैश्विक धरातल पर मन व प्राण अपने आपको वाक् के माध्यम से ही प्रकट करते हैं। मन की इच्छा से प्राण के बल द्वारा वाक् में **अमूर्त** व **मूर्त** नामक दो विकार पैदा होते हैं। अमूर्त की प्रकृति चेतन व मूर्त की जड़ (भूत) होती है और यह अमूर्त ही मूर्त में व्याप्त होकर इन्हे

---

१. ऐतरेय उपनिषद्, १-१, १-२

२. बृहद् आरण्यक उपनिषद्

गतिमान किए रहता है। इस प्रकार व्यावहारिक धरातल पर चेतना (मन, प्राण) के संश्लेषणात्मक तथा इसके मूर्त परिणामों के विश्लेषणात्मक बोध की दृष्टि से शुद्धतम ज्ञान के भी दो व्यक्तात्मक पक्ष उभर कर सामने आते हैं - बोधात्मक निरपेक्षता यानि **प्रज्ञानपक्ष** तथा विविधात्मक सापेक्षता यानि **विज्ञानपक्ष** (***प्रविष्टं ज्ञानं-प्रज्ञानम्, विविधं ज्ञानं-विज्ञानम्***)। अप्रमेय सत्ता के क्रियात्मक परिणामों से उद्भूत हुए सापेक्षात्मक विश्व के नानात्व के विषय मे जानने की प्रक्रिया ही जहाँ **"वि"** उपसर्ग से समन्वित **"ज्ञान"** यानि **वि-ज्ञान** (विविध या विशिष्ट ज्ञान) है, वहीं इस वैविध्य के नानात्व में अन्तरर्निहित सर्वव्यापी चैतन्य के एकत्व (***आत्मवत् सर्वभूतेषु***) के सूत्रात्मक विराटत्व को अनुभूत करना ही **"प्र"** उपसर्ग से समन्वित **"ज्ञान"** का **प्र-ज्ञान** (***नवनवोन्मेषशालिनी-प्रतिभाजन्य ज्ञान***) नामक व्यावहारिक पक्ष है। इस प्रकार प्रज्ञान की अपरिणामी एकमेयता अनुभूतिजन्य होने के कारण जहाँ **दर्शनात्मक** होती है, वही परिणामजनित क्रियात्मक प्रकल्पों से संबंधित होने के कारण विज्ञान का क्षेत्र **आचरणात्मक** होता है। चूँकि सृष्टि का विविधात्मक स्वरूप उसके परिणामजनित आचरणों द्वारा ही अस्तित्व में आता है, अतः उसका यह बहुआयामी बैविध्य अपने नानात्व के परिप्रेक्ष्य में विज्ञान की ही श्रेणी में समायोजित होता है। वैदिक श्रुतियाँ तो सृष्टि की संरचना, स्थिति व लय को विज्ञानमय ही मानती रही है (***विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते, विज्ञानेन जातानि जीवन्ति, विज्ञानं प्रयन्त्यभिसविशन्तीति, विज्ञानमित्युपास्व***[१])। परिणामजनित भूतादिक प्रपञ्च अपने परिवर्तनशील प्रकृति के कारण नित नए कलेवरों में रूपान्तरित होते रहते हैं, अतः भारतीय अवधारणाओं में इनके परिणामित नश्वरता को मर्त्या तथा प्राकृतिक चेतना की अपरिणामी शाश्वतता को अमरत्व का द्योतक माना गया है। औपनिषदिक आख्यानों में प्रयुक्त विद्या-अविद्या, पर-अपर, अमृत-मृत्यु, श्रेय-प्रेय आदि का विशेषण अमूर्त की शाश्वतता तथा मूर्त की नश्वरता से ही अभिप्रेरित है।

इस विज्ञानमय सृष्टि का प्रत्येक कण व उनके आपसी संयोजनों से निर्मित बृहद् से बृहत्तम पिण्डों की अनंत श्रृंखलाएँ एक अप्रतिम योजनान्तर्गत विविध आयामी गतिधर्मिताओं के साथ निरन्तर ही गतिशील हैं। सृष्टि की इस लयवद्ध गतिशीलता के कारण अखिल ब्रह्माण्ड में अनवरत ही अलौकिक संगीत लहरियाँ भी झंकृत हो रही हैं। साधारणतः अपने कर्ण-कुहरों की सीमित क्षमताओं के कारण मानव इन पराश्रव्य ध्वनियों को श्रवण करने में असमर्थ होता है, किन्तु आधुनिक विज्ञान अपने अति उन्नत संकेतकों के माध्यम से विभिन्न प्रायिकताओं पर गुंजायमान हो रही आकाशगंगाओं की ध्वन्यात्मक संगीतों के कुछ अनस्फुट अनुगूँजों (**कास्मिक फेड एक्स**) को रिकार्ड करने में सफल हो चुका है[२] वस्तुतः इन ध्वन्यात्मक संगीत लहरियों का मूल स्रोत गहरे

---

१. तैत्तिरीय उपनिषद्, ३-५

२. विज्ञान पत्रिका **"नेचर"** के सितम्बर, २००४ अंक में प्रकाशित कॉस्मिक रिदम् की रिपोर्ट)।

आकाश में व्याप्त अव्याकृत ध्वनियों (***वाग्वै पराची अव्याकृताऽवदन्***-शतपथ ब्राह्मण, चतुर्थ काण्ड) से ही जुड़ा हुआ है। श्रुतियों में वर्णित अव्याकृत ध्वनियों का प्रस्फुटन **निःध्वान्** के उस मूल वाक्तत्त्व से होता है जो किसी भी प्रकार के घर्षण अथवा संसर्ग से सर्वथा अछूती रहने के कारण ध्वनि-रहित ही होती है। निःध्वान की यह विशुद्धताएँ सिर्फ प्राणिक ऊर्जा के मूल तरंगों के आपसी अतिक्रमण की सीमाओं के पूर्व तक ही अक्षुण्ण बनी रह पाती हैं। प्राणिक ऊर्जा का तात्पर्य गत्यात्मकता के उन स्वतः स्फूर्त संचेतनाओं से है, जिनके कारण सृष्टि का उद्‌भव, उसकी प्रकारान्तर संरचनाएँ व इनके उत्तरोत्तर विकास की सभी आवश्यक प्रक्रियाएँ नियोजित होती रहती हैं। यह सर्वविदित है कि किसी भी तरह की गत्यात्मकता के लिए स्थिर आधार की अपरिहार्यता अनिवार्य होती है। अतः अमूर्त ज्ञान की निस्सीम निश्चलता के गर्भ में प्रसुप्त चेतना के संकल्पित उद्वेलनों से उत्सर्जित प्राणिक ऊर्जा की तरंगें ही अपनी आड़ी-तिरछी-लम्बवत् गतियों से सर्वत्र फैलती हुई (***तिरश्चीनो विततो रश्मिः एषाम् अधः-***[१]) सृष्टि की नित्य परिवर्तित विविधाओं में प्रतिभाषित होने लगती हैं। क्वाण्टम् (प्रमात्रक) भौतिकी की सुप्रसिद्ध आचार्या **दानाह जोहार** भी अपनी चर्चित शोधकृति **"द अल्टीमेट इन्टेलिजेंस"** में कुछ इसी प्रकार के तथ्यों तक पहुँचने का ही प्रयास करती दिखती हैं। उनके अनुसार शाश्वत चेतना के सर्वथा शान्त व स्थिर **वैक्यूम पटल** (Eternity Domain) से उत्सर्जित ऊर्जा के तीव्र सन्दोलनों द्वारा ही प्रकृति के सभी मूल बल व ब्रह्माण्ड के आधारभूत कणों-प्रतिकणों का अस्तित्व उभरता है। भौतिकी के सार्वकालिक **आचार्य अल्वर्ट आइन्स्टीन** का ऊर्जा-मात्रा संबंध में प्रतिपादित $E=MC^2$ का सूत्र भी ऊर्जा की गत्यात्मकता को ही मात्रा का कारक ठहराता है। आइन्स्टीन महोदय से शताब्दियों पूर्व हुए **गुरु नानकदेव** ने इस वैज्ञानिक रहस्योद्‌घाटन को **"एक नूर ते सब जग उपज्या"** के सहज भाव में व्यक्त कर दिया था।

इस तरह निस्सीम निश्चलता के अन्तःस्थल से उत्सर्जित प्राणिक ऊर्जा की तरंगें अपनी आड़ी-तिरछी-लम्बवत् गतियों द्वारा एक दूसरे का अतिक्रमण करती हुई सर्वत्र ही रश्मियों का एक सघनतम जाल सा बुन डालती है। ***"विश्वतः तन्तुभिः एकशतं देवकर्मभिः आयतः"*** द्वारा[२] ऋग्वेद भी सृष्टि की इस दिव्य बुनावट को ही इंगित करता है। इन तरंगों के सतत आवेग-प्रत्यावेगों के परिणामस्वरूप प्राणिक रश्मियों का यह अवर्चनीय जाल निरंतर प्रकम्पित भी होता रहता है। आवेग-प्रत्यावेगों के संकर्षण व प्रकम्पन की सतत प्रक्रियाओं के चलते इस अलौकिक जाल से निरंतर ही अत्यंत अल्प घोष वाली अव्यक्त ध्वनियाँ भी झंकृत होती रहती हैं। इन अव्यक्त ध्वनियों के औचित्य पर प्रकाश डालते हुए **महर्षि दीर्घतमा औचथ्य** यह स्पष्ट करते है कि तीन

---

१. नासदीय सूक्त, ऋग्वेद-१०/१२९/५

२. ऋग्वेद (१०/१३०/१)

दिव्य बन्धनों (***त्रीणि दिवि बन्धनानि***[1]) अर्थात् प्राणिक ऊर्जा की आड़ी-तिरछी लम्बवत् तरंगों के घर्षणों से आच्छादित वाणी (**गौः अभिवृता**) का अत्यंत मन्द स्वर (**शिङ्क्ते**) लगभग मिमियाते (**मिमाती**) हुए ही गूँजता (**मायु**) है (***अयं स शिङ्क्ते येन गौरभीवृता मिमाती मायु***[2])। यहाँ पर उल्लेखित "**मिमाती**" और इसी से साम्यता रखने वाले-"**मिमते, मिमाय**" आदि वैदिक शब्दों का आशय अल्प प्राण वाले श्रोत अग्राह्य अति मन्द ध्वनियों से ही जहाँ संबंधित हैं, वही दिव्य तरंगों के आपसी अतिक्रमणों से स्फुलिंगित ज्योति के स्थूल स्वरूपों में प्रस्फुटित ध्वनियों के आद्य स्वरूप को वैदिक श्रुतियों में इसी के प्रतीकात्मक "**गौरी**" अर्थात् श्वेता या उज्ज्वला भी कहकर सम्बोधित किया गया है (***गौरीर्मिमाय सलिलानि-परमे व्योमन्***[3])।

उपर्युक्त मंत्र में प्रयुक्त "**सलिल**" का तात्पर्य बहाव या प्रवाह से ही है और इसी मंतव्य के अनुरूप ही[4] **ऋग्वेद** के **नासदीय सूक्त** में भी सृष्टि की प्रसव बेला (**तमसा** गूढम् **अग्रे**) में सूक्ष्म रूप से (**तुच्छयेन**) चहुँ ओर (**सर्वम् इदम्**) प्रस्सरित (**सलिलं**) हुई अव्यक्त अर्थात् श्रोत अग्राह्य (**अप्रकेतम्**) ध्वनियों के निहितार्थ को "***तमसा गूढम् अग्रे अप्रकेतम् सलिलं सर्वमा इदम् तुच्छये***" द्वारा ही इंगित किया गया है। सृष्टि में सूत्रवत् व्याप्त प्राणिक ऊर्जा की तरंगें व इनके ज्योतिर्मय संकर्षणों से निरंतर गुँजायमान हो रही आद्य ध्वनियों की अति मन्द स्वर लहरियों के अविनाभाव संबंधों के दृष्टिगत ही वेद मंत्रों के एक द्रष्टा ऋषि, वाक् के मूल स्वरूप को ऊर्जा (**ऊर्जम्**) के अमृत रूप में (**पयांसि**) सभी ओर से (**चतस्त्रः**) बरसते (दुदुहे) हुए अनुभूत करता देखता है (***यत् वाक् वदन्ती अविचेतनानि ... मन्द्रा चतस्त्रः ऊर्जम् दुदुहे पयांसि***[5])। प्राणिक रश्मियों के सूत्रात्मक जाल की सर्वव्यापी प्रकृति के कारण ही इनमें निविष्ट ध्वनियाँ सृष्टि में सर्वत्र प्रस्सरित होती रहती हैं, जिन्हें दूर संवेदी संकेतकों के उन्नत माध्यमों से प्रकाश तरंगों की विभिन्न प्रायिकताओं के आधार पर स्पष्ट रूप से सुना भी जा सकता है। ज्योतिर्मय तरंगों का ध्वनियों में तथा ध्वनियों का ज्योतिर्मय तरंगों में रूपान्तरण की सूक्ष्म प्रक्रियाएँ सृष्टि में अनवरत चलती रहती हैं। ज्योति व ध्वनि के आपसी विनिमय की इस सनातन प्रवृत्ति (***शब्दज्योतिः सनातनम्***) के कारण ही भारतीय शास्त्रों में इनकी अभ्यर्थनाएँ **ज्योति ब्रह्म** व **नाद ब्रह्म** के रूप में भी की गई है। ज्योति व शब्द के परस्पर विनिमयों को रेडियो, टेलीविजन, दूरभाष, मोबाइल व इण्टरनेट आदि संचार माध्यमों के प्रत्यक्ष प्रयोगों द्वारा सहजता से अनुभूत किया जा सकता है। इसी तरह ध्वनियों में निविष्ट ऊर्जा का भी अति उन्नत उपकरणों के माध्यम से दोहन कर वैकल्पिक संसाधनों का नया स्रोत विकसित किया जा सकता है।

१. ऋग्वेद-१/१६३/३
२. ऋग्वेद-१/१६४/२९
३. ऋग्वेद-१/१६४/४१
४. ऋग्वेद १०/१२९/३
५. ऋग्वेद ८/१००/१०

आधुनिक विज्ञान भी सृष्टि की जटिलतम गुत्थियों को सुलझाते हुए आणविक, परमाणविक, कणात्मक, परमकणात्मक विश्व के क्रम से अब अधिसूत्रात्मक जगत् के सूक्ष्मतर स्तर पर भी पहुँचने का दावा करता दिखता है। विज्ञान की दृष्टि में आकाश का **एब्सोल्यूट वैक्यूम** (निर्वात स्थिति) अब मात्र शून्य नहीं बल्कि गणितीय गणनाओं के अति लघुतम स्वरूप वाले परम उद्भावक फेनिल द्रव्यों (**ग्लसमड येलम**) से ही अटा-पटा है। वैदिक श्रुतियों में आकाश की इस आपोमयं तरलता को **अम्भस्** के सार्थक ऋत-तत्त्व से ही सम्बोधित किया गया है (***शर्मन् अम्भः ... गहनं गम्भीरम्***[१])। चूँकि प्रकाश के वर्णक्रमों में अपने कमजोर तरंगदैर्घ्य के कारण नीला रंग जल के सूक्ष्म कणों द्वारा प्रत्यावर्तित हो जाता है, अतः परम व्योम में व्याप्त अम्भस् की फेनिल सघनता के कारण ही रंगहीन आकाश हमें नीला दिखलाई पड़ता है। गहरी झीलों या फिर अथाह जलराशि वाले सागरों के नीला दिखलाई पड़ने के पीछे भी यही कारण है। नभोविज्ञान की सर्वोत्कृष्ट शोधकृति में शुमार **"द कॉस्मिक कोड"** के अनुसार आकाश के इसी सूक्ष्मातिसूक्ष्म आद्य द्रव्यों की रासायनिक प्रक्रियाओं से ही कणों-प्रतिकणों की मूल इष्टिका वाले विविधात्मक संसार का अस्तित्व पनपता है। प्रख्यात नभोवैज्ञानिक **फ्रीमैन डॉयसन** द्वारा प्रतिपादित विज्ञान के अधुनातन सिद्धांत आकाश के इस उद्भावक द्रव्यधर्मिता का कारक $१०^{-३३}$ से.मी. वाले अति महीन **कॉस्मिक धागों** को ही ठहराते है, जो सम्पूर्ण आकाश को ही अपने सघनतम जाल में आवेष्टित किए हुए है। इसी आधार पर **"थ्योरी ऑफ एॅवरीथिंग"** के रूप में प्रतिष्ठापित कॉस्मिक धागों का यह नवीन अन्वेषण एक कोशिकाई सूक्ष्मदर्शीय जीव से लेकर आकाश जैसे अनंत आयामों तक को इन्हीं सूत्रों का ही प्रतिफलन ठहराते हैं। प्रोटॉन कण से भी एक अरबगुना महीन इन कॉस्मिक धागों के स्वतः स्फूर्त स्पन्दनों के कारण अनवरत ही इनमें से वायलिन सरीखी अति मद्धिम ध्वनि-तरंगें भी प्रस्फुटित हो रही हैं। कॉस्मिक धागों के नैसर्गिक स्पन्दनों से प्रस्फुटित इन मूल ध्वनि-तरंगों का स्वरूप प्रतिगत्यात्मक अन्य प्रत्युत्पन्न तरंगदैर्घ्यों के संसर्गो से क्षेत्र विशेष की स्थिति अनुरूप परिवर्द्धित भी होता रहता है। इसी आशय के दृष्टिगत[२] **ऋग्वेद** का **द्रष्टा ऋषि** इन प्रतिस्पन्दनों से विभाजित हुई (**तक्षति**) मूल ध्वनियों के अनुगूँजों (**गौरीः मिमाय**) को एक, दो, चार, आठ, नौ के अनेकों प्रकार के क्रम से (**सहस्राक्षरा**) व्योम में प्रतिध्वनित होते हुए ही अनुभूत करता है (***गौरीर्मिमाय तक्षत्येकपदी द्विपदी या चतुष्पदी, अष्टापदी नवपदी बभूवषी सहस्राक्षरा परमे व्योमन्***)। यही कारण है कि आकाश की बुनावट सदृश्या प्रतिभासित इन धागों के स्पन्दनों से अनुशासित विभिन्न आकार-प्रकार की निहारिकाएँ भी अपने-अपने परिभ्रमण पथों पर अनोखी संगीत लहरियों के साथ गतिमान रहती हैं। **कॉस्मिक स्ट्रिंग** के इस रहस्योद्घाटन से सदियों पूर्व जन्में संत कवि **कबीरदास** भी अपने पेशेवर अंदाज में सूत की झीनी-झीनी ध्वनियों

---

१. ऋग्वेद-१०/१२९/१

२. ऋग्वेद (१/१६४/४१)

के धुन पर बुनें **चादर** (आकाश) में ही **दिक्** (पंचतत्त्व) व **काल** (आठों प्रहर) को समेटने के दार्शनिक रहस्यों द्वारा वैदिक मंतव्यों की गूढ़ता को ही उजागर करते दिखते हैं (**आठ हाथ की बनी चदरिया/पाँच रंग पटिया पारी/चाँद सूरज जामें झालर लागे/जगमग ज्योत उजियारी/झीनी-झीनी रे बीनी चदरिया/झीनी-झीनी रे...**)। कबीर के इस यथार्थवादी रूपक के अनुरूप ही विज्ञान की **हिग्स फील्ड थ्योरी** भी समूचे आकाश को **वायलिन** के मद्धिम धुनों से गुँजायमान **फेन** के अद्भुत **गलीचे** सदृश ही ठहराती है। इस प्रकार आधुनिक विज्ञान भी अपनी पदार्थगत परिसीमाओं के उपरांत भी **"कास्मिक स्ट्रिंग"** की पारिभाषिक शब्दावली के माध्यम से ऋषि-प्रज्ञा द्वारा उद्घाटित तथ्यों की ही एक प्रकार से नूतन व्याख्या करता दिखता है।

सृष्टि की इस बुद्धिवादी संरचना से संबंधित किसी भी तरह की बोधगम्य अनुभूति या अभिव्यक्ति निष्पन्नता का आधार अर्थजनित शब्द या इनके समुच्चय से बनी बोली अथवा भाषा ही होती है (***अनुविद्धमिव ज्ञानं सर्व शब्देन भाषते***-भर्तृहरि कृत वाक्यपदीयम्) और इस अर्थजनित भाषा अथवा बोलियों का स्वरूप **ध्वनि-वर्ण-पद-वाक्य** के माध्यम से ही निरखता है (***ध्वनिवर्णाः पदं वाक्यमित्यास्पदचतुष्ट्यम्***-वाक्यपदीयम्)। इस प्रकार ध्वनि ही भाषा अथवा बोलियों की उद्गम बिन्दु सिद्ध होती है। ऋग्वेद के प्रथम मण्डल (१६३/१) में वर्णित ***"यद्क्रन्दः प्रथमे जायमानः"*** का सन्दर्भ जहाँ **ध्वनि स्फोट** की प्रथम घटना को सृष्टि के प्रसव के साथ ही जोड़ता है, वहीं निःध्वान के क्रम से सर्वत्र व्याप्त हो गई **अव्याकृत ध्वनियाँ** ही अनंतर के व्याघातों से **स्वर-वर्ण** आदि श्रोतव्य पदों के इन चार विभिन्न स्तरों से गुजरनें के पश्चात् **अर्थजनित भावों** को प्रकट करने वाली **भाषा** अथवा **बोलियों** के रूप में प्रकट होने लगती है (***चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः***[1])। चूँकि वैदिक विज्ञान का आधार मूलतः आधिभौतिक, आधिदैविक व आध्यात्मिक नामक त्रयी विद्या ही है, अतः इसी अनुरूप वाक् के चारो विवर्तो को भी वेद में तीन प्रकार से ही परिभाषित किया गया है। **आधिभौतिक** मंतव्यों में सत्य ज्ञान के मानसिक संकल्पों से उत्सर्जित प्राणिक ऊर्जा के बलों द्वारा वाक् में उत्पन्न अमूर्त नामक प्रथम विकार से प्रस्फुटित निःध्वान के प्रथम स्तर को **"सत्या वाक्"**, तदन्तर परम व्योम अर्थात् **परम स्थाने तिष्ठति-परमेष्ठी** (जिसे आधुनिक संदर्भो में आकाशगंगा की संज्ञा से चिह्नित किया जाता है) के अम्भस् स्वरूपों (फेनिल द्रव्यों) में सलिल सदृश्य व्याप्त अव्याकृत ध्वनियों को **"आम्भृणी वाक्"**, सौर मण्डल के मध्यरेखा (बृहती) पर स्थित ज्योतिर्मय सूर्य (***सूर्य्यो बृहतीमध्यूढस्तपति*** - छान्दोग्य उपनिषद्) के रश्मि तरंगों के सम्पर्क से व्याकृत हुई स्वरात्मक ध्वनियों को **"बृहती वाक्"** तथा इनके पुनः पृथ्वी आदि ग्रहों के परिभ्रमण गतियों से व्याघात होने पर प्रतिध्वनियों के रूप में निष्पन्न व्यजंनात्मक वर्णो को **"अनुष्टुप् वाक्"** कहा गया है। इसी

---

१. ऋग्वेद-१/१६४/४५

तरह **आधिदैविक** सन्दर्भों इन्हें ही क्रमश अमूर्त के अमृत स्वरूप के अनुरूप **"अमृता"**, प्राणिक तरंगों के आपसी अतिक्रमणों से स्फुलिंगित उद्भवों के कारण **"दिव्या"**, सूर्य-रश्मियों में स्थित ऐन्द्र प्राणों के प्रभाव से ध्वनित स्वरात्मक वाक् को **"ऐन्द्री"** व पृथ्वी आदि ग्रहों के मर्त्य भावों के तहत तत् प्रतिध्वनित व्यंजनात्मक वाक् को **"मर्त्या"** कहा गया है। **आध्यात्मिक** संस्था में उपस्थित वाक् के इन चारों स्वरूपों को इनके यथास्थिति अनुरूप अर्थात् मन के विशुद्ध प्रज्ञाभाव से संबंधित वाक् को **"परा"**, अनुभूति जन्य मानसिक उद्गारों को **"पश्यन्ती"**, श्वासात्मिका उपांशुवाक् को **"मध्यमा"** तथा *दूरतोऽपि श्रोतग्राह्य* नादात्मिका वाक् को **"बैखरी"** के रूप में चिह्नित किया जाता है। किंचित इन्हीं आशयों के आलोक में ही यह कहा भी गया है कि - ***"बैखरी शब्द निष्पत्तिर्मध्यमा श्रुतिगोचरा, द्योतितार्थानुपश्यन्ती सूक्ष्मवागनपायिनी"***।

इस तरह **स्फोट, ध्वनि, स्वर** व **वर्ण** (व्यंजन) के चार भागों में विभाजित हुई वाक् (**चत्वारि वाक्**) के अर्थ संभाव्य स्वरूपों का प्राकट्य उत्तरार्ध पक्ष वाले बृहती तथा अनुष्टुप् के स्तरों पर ही सम्भव हो पाता है। सौर मण्डल के विष्वद् रेखा (बृहती) पर स्थित सूर्य की रश्मियों से छन्दित स्वरात्मक ध्वनियों को **बृहती छंद** तथा अनुष्टुप् रेखा पर गतिमान पृथ्वी आदि ग्रहों के व्याघातों से छन्दित वर्णात्मक प्रतिध्वनियों को **अनुष्टुप् छंद** के रूप में चिह्नित किया गया है। चूँकि किसी भी वृत्तात्मक क्षेत्र की सबसे बड़ी परिधि का निर्धारण उसके मध्य रेखा के आयतन से ही सुनिश्चित किया जा सकता है, अत: वृहती के इसी सिद्धांत के अनुरूप सौर मण्डल के मध्य रेखा पर स्थित सूर्य के छंद को भी अंक विद्या की सबसे बड़ी इकाई अर्थात पूर्णांक के ही प्रतीकात्मक **नवाक्षर** या नौ विन्द्वात्मक तथा वृहती रेखा से आठ अंश नीचे की ओर प्रतिष्ठित अनुष्टुप् रेखा पर गतिमान पृथ्वी आदि ग्रहों के छंद को **अष्टाक्षर** या अष्टविन्द्वात्मिका ही माना गया है। इन्हीं नवाक्षर छंदों के कारण आरोग, भ्राज, स्वर्ण, पतंग, पटर, ज्योतिष्मान्, विभास, हिरण्यजिह्वा तथा हिरण्यपाणि (***आरोगो भ्राजः स्वर्णरो पतङ्गः पटरः ज्योतिष्मान्, विभासः हिरण्यजिह्वस् हिरण्यपाणिमूतये सवितारमुपह्वये***[1]) आदि नौ ऐन्द्र प्राणों में निविष्ट ऊर्जा वैशिष्ट्यों के अनुरूप सूर्य की रश्मियों का रंग क्रमशः **लाल, नारंगी, पीला, हरा, नीला, जामुनी, बैगनी, पैराबैगनी व रक्तिम लाल** के नौ स्तरों में बँट जाता है, जबकि अष्टाक्षर छंद के परिणामस्वरूप **ध्रुव, धर, सोम, आपः, वायु, अग्नि, प्रत्युष** व **प्रभाष** नामक **आठ वसु प्राणों** के श्रमित कारणों (**स श्रान्तस्तेपानः**) से वसुधा (***दुहिता वसूनां*** यानी पृथ्वी) अपने को **फेन, मृद** (कीचड़), **शुष्क** (सूखी परत), **पयुष** (ऊसर), **सिकता** (रेत), **शर्करा** (कंकड़), **अश्मा** (पत्थर) व **अयः हिरण्यम्** (लौह-स्वर्ण आदि धातुओं) के आठ स्वरूपों में व्यक्त करते हुए ऐश्वर्यदायिनी बनती है (***स श्रान्तस्तेपानः फेनम् सृजत स मृदं शुष्का पयूष सिक्तं शर्कराम् अश्मानाम् अयो***

---

१. तैत्तिरीय संहिता-१.७

